UGC JOURNAL NO.-40960 ISSN-0974-8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

(A REFEREED QUARTERLY RESEARCH JOURNAL)

४२ वर्षे द्वितीयोऽङ्कः ( अप्रैलमासाङ्कः ) २०१७ ई०

प्रधानसम्पादकः

**प्रो० रमेशकुमारपाण्डेयः**

कुलपतिः

सम्पादकः

**डॉ० शिवशङ्करमिश्रः**

सहसम्पादकः

**डॉ० ज्ञानधरपाठकः**



प्रकाशन-स्थलम्

**श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्**

( मानितविश्वविद्यालयः )

नवदेहली-११००१६

UGC JOURNAL NO.-40960 ISSN-0974-8946

अनुसन्धान-प्रकाशन-विभागीया

त्रैमासिकी शोध-पत्रिका

# शोध-प्रभा

(A REFEREED QUARTERLY RESEARCH JOURNAL)

४२ वर्षे द्वितीयोऽङ्कः (अप्रैलमासाङ्कः) २०१७ ई०

प्रधानसम्पादकः
प्रो० रमेशकुमारपाण्डेयः
कुलपतिः

सम्पादकः
डॉ० शिवशङ्करमिश्रः

सहसम्पादकः
डॉ० ज्ञानधरपाठकः



प्रकाशन-स्थलम्

श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

(मानितविश्वविद्यालयः)

नवदेहली-११००१६

प्रकाशकः
श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्
(मानित-विश्वविद्यालयः)
कुतुब-इन्स्टीट्यूशनल-एरिया, नवदेहली-११००१६



ISSN :- 0974 - 8946

४२ वर्षे द्वितीयोऽङ्कः (अप्रैलमासाङ्कः) २०१७ ई०



मुद्रकः - **अमरप्रिंटिंगप्रैसः**, दिल्ली

# शोध-प्रभा

## श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठस्य
## अनुसन्धान-प्रकाशन-विभागीया पत्रिका

- ❖ एषा त्रैमासिकी शोध-पत्रिका।
- ❖ अस्याः प्रकाशनं प्रतिवर्षं जनवरी-अप्रैल-जुलाई-अक्टूबरमासेषु भवति।
- ❖ अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु स्वोपज्ञानुसन्धान-प्रवृत्तेरुद्बोधनं प्रोत्साहनं विविधदृष्ट्याऽनुसन्धेयविषयाणां प्रकाशनं च विद्यते।
- ❖ अस्यां श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्थानामन्येषां च विदुषां स्वोपज्ञविचारपूर्णा अनुसन्धानप्रधाननिबन्धाः प्रकाश्यन्ते।
- ❖ अप्रकाशितानां दुर्लभानां प्राचीनाचार्यरचितानां लघुग्रन्थानां सम्पादनभावानुवादटीकाटिप्पण्यादि-पुरस्सरं प्रकाशनमप्यस्यां क्रियते।
- ❖ प्रकाशित-निबन्धः पत्रिकायाः एक प्रतिः लेखकाय निःशुल्कं दीयते, यस्मिंस्तदीयो निबन्धः प्रकाशितो भवति।
- ❖ अस्यां पत्रिकायां विशिष्टानां संस्कृत-हिन्द्याङ्ग्ल-ग्रन्थानां समालोचना अपि प्रकाश्यन्ते। आलोच्यग्रन्थस्यालोचना यस्मिन्नङ्के प्रकाशिता भवति सोऽङ्को ग्रन्थकर्त्रे निःशुल्कं दीयते किञ्च समालोचनापत्राण्यपि यथासौविध्यं दीयन्ते। प्रकाशितशोधसामग्री लेखकस्यास्ति अतः लेखस्य मौलिकतादिविषये सम्पूर्ण दायित्वं लेखकस्य भविष्यति न तु सम्पादकस्य न वा प्रकाशकस्य।
- ❖ पत्रिकासम्बद्धन्यायालयीयविवादविषये दिल्लीन्यायालयक्षेत्रमेव परिसीमितमस्ति।
- ❖ अस्याः वार्षिकसदस्यताराशिः रु. १५०.०० पञ्चवार्षिकसदस्यताराशिः रु.७००.००, आजीवन-सदस्यताराशिः रु. १५००.००।। सदस्यताराशिः **कुलसचिव, श्रीलालबहादुरशास्त्रीराष्ट्रिय-संस्कृतविद्यापीठ**, नई दिल्ली-१६, इति सङ्केतेन (बैंकड्राफ्ट अथवा मनीआर्डर) द्वारा प्रेषणीयः।
- ❖ पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः 'सम्पादकः' 'शोध-प्रभा', श्रीलालबहादुरशास्त्री राष्ट्रिय-संस्कृतविद्यापीठ, कटवारिया सराय, नई दिल्ली-११००१६ इति सङ्केतेन विधेयः।

**सम्पादकः**

# नैवेद्यम्

वागियं भवति शास्त्रेषु धेनुपदेनापि व्यपदिष्टा। धेनुरित्यत्र समाविष्टप्रकृतेः प्रीणनत्वाभिधायकत्वं वाच्यार्थपरम्परया अतिरोहितं विपश्चिताम्। तदेव पदसाहचर्यात् सवत्सा धेनुरित्यादौ शब्दार्थावच्छेदकत्वमुपपादितं यथाशास्त्रम्। तदेवाह श्रुतिरपि- **''सा नो मन्द्रेषुर्ज्ज दुहाना धेनुर्वागस्मानुपसुष्टुतैतु''** इत्यादिना विवरणमस्याः आप्तचणैः प्रकटितं यदस्या वाच एव जलान्नादिना तेजस्त्वादिना च विवृतं स्वरूपं कं कं नोपकरोति किं किञ्च न विधत्ते? तस्मात् वाग्विदामनितरसाधारण्यम् आधमर्ण्यम् अस्माभिरङ्गीकरणीयमेव। पुनश्च तेषां सम्भूतिसारमेव सङ्कलय्य उपपादयतां सुधियां कश्चित् विलक्षणप्रकाश उन्मील्यते पत्रिकाप्रकाशनमाध्यमेन। तदनु प्रकान्तपरम्परां प्रवहत्सरणिमासाद्य उपकल्पितोऽयमप्यङ्कः महते गौरवाय इत्यप्यसन्दिग्धम्। मुदेऽहं यदस्मिन्नङ्के द्वादशशीर्षकेषूपनिबद्धाः विविधभाषासु संदृब्धाः निबन्धाः विलसन्तितराम्। तत्र न केवलं पारम्परीणमनुवर्ततेऽपितु तत्समन्विता काचिदभिनवापि उद्भावनवीथिरुद्भाविता। तत्र स्वरशाब्दबोधव्यञ्जनालङ्कारादीनां शास्त्रीयविषयाणां विमर्शपूर्वकाध्ययनेन समं पशुपक्षिविज्ञान-मानवाधिकारप्रभृतीनां नैकेषाम् अभिनवविषयाणामपि महता समारम्भेण सयुक्तिकमुपपादनं प्रक्रान्तभरेण ज्ञानेन आस्थापितम्। इदन्तु ध्येयं यत् विविधेषु शास्त्रेषु यदपि प्रकीर्णं तत् सर्वमनुसन्धित्सूनां प्रज्ञाविवेकाय नितान्तमेवापेक्षितमतो महता परिश्रेण गवेषकाः तत् सङ्कलय्यानुद्भूतमपि उद्भावयन्ति। तस्यापि नैरर्थक्यं न भवेदिति धिया पत्रिकोपक्रमेण प्रकाशनं मुख्यं कर्मेति मत्त्वा अनुष्ठीयत इदं पवित्रं कर्म। यत अस्यैव श्लोकत्वमधिष्ठापितं भवति। ''श्लोकः पुरुषप्रयत्नः'' इति प्रातिशाख्यात्। प्रयत्नानार्थक्येन न भवितव्यमित्यनुशासनादपि समस्तलोकस्यार्जवेनाधिगमायापि इदं प्रकाशनं सर्वथैव समुचितप्रसङ्गं वरयते। तेनापि विद्यापीठमिदं स्वकीयप्रकाशनविभागद्वारैतत्सर्वं व्युत्पित्सुहिताय अनवद्यचेतसां सुधियां हार्दं व्यवस्थाप्यात्मानं कृतिनं मन्यते।

मन्येऽहमियं पत्रिका स्वकीयम् अजस्रं गौरवं परिपालयन्ती अग्रेऽपि स्वकीयमादर्शं निकषभावेन आधास्यत इति।

**प्रो. रमेशकुमारपाण्डेयः**

**कुलपतिः**

# सम्पादकीयम्

विश्वस्य समेषां राष्ट्राणां भवति काचिद् राष्ट्रगौरवभूता स्वकीया राष्ट्रभाषा, यस्यां विराजते राष्ट्रस्य माहात्म्यम्, राष्ट्रीया संस्कृतिः, राष्ट्रीया परम्परा, राष्ट्रीयचिन्तनञ्च। सर्वाण्यपि राष्ट्राणि स्वकीयया मातृभाषया नितान्तं स्निह्यन्ति। स्वभाषासम्भाषणे, स्वभाषालेखने, स्वभाषापठने-पाठने च आत्मगौरवमाकलयन्ति। किमधिकं स्वभाषासंरक्षणाय आत्मानमपि समर्पयन्ति, परञ्चस्माकं देशे शासकानां नास्ति तादृशी मतिः न वा भारतीयानां यूनां तादृक् भाषाप्रेम। केवलमर्थलाभाय यतन्ते तदर्थं कापि भाषा भवेत् कापि विद्या भवेत्, किमपि साधनं भवेत्, किमपि वा आचरणं भवेत् सर्वमौदार्येणोररीकुर्वन्ति। वस्तुतः विश्वेऽस्मिन् विकसितानि यानि खलु राष्ट्राणि तानि स्वकीयं साहित्यवैभवम्, स्वकीयं ज्ञानविज्ञानम्, स्वकीये संस्कृतिपरम्परे च स्वभाषया प्रकाशयन्ति। जर्मनेदेशे जर्मनभाषया, फ्रांसदेशे फ्रेञ्चभाषया, जापानदेशे जैपनीजभाषया, चीनदेशे चीनीभाषया एवमेव अन्येष्वपि देशेषु स्वभाषया एव व्याख्यायते समग्रं तकनीकिज्ञानविज्ञानम्। अत्र भारते न तथा, कियद्दौर्भाग्यमस्माकम्? समासां भाषाणां जननीभूता, विश्वैर्वन्दिता सती अस्माकं संस्कृतभाषा अस्माभिः नाद्रियते, नास्त्यस्माकं संस्कृतं प्रति समवेतश्रद्धा न वा हिन्दीभाषां प्रत्यैकमत्यम्, अपितु तत्तक्षेत्रीयाः तमिल-तेलगु-कन्नड-मलयालम-उडिया-वंग-असमिया-मणिपुरी प्रभृति भाषा एवाद्रियन्ते येन न भवति अखण्डराष्ट्रैक्यबोधः। अतोऽपेक्ष्यते यदस्माकं देशस्यापि काचित् सर्वस्वीकार्या भाषा भवेद्यया अस्माकं समग्रं प्राचीनतममाधुनिकञ्च भारतीयं ज्ञानविज्ञानं व्याख्यायितं भवेत्। अस्याः भावनाया सम्पूर्तिः संस्कृतभाषया एव सम्भवति यतः संस्कृतं समासां भारतीयभाषाणां जननी, अत्र निहितमनन्तं ज्ञानसम्पदतः संस्कृतस्य राष्ट्रभाषारूपेण संस्थापनं यदि भवेत्तर्हि विश्वे भाषादृष्ट्या भारतस्य महत्त्वमभिवर्द्धेत्।

विश्वविद्यालयानुदानायोगेन स्वीकृतासु सन्दर्भितशोधपत्रिकास्वन्यतमा श्रीलालबहादुरशास्त्री-राष्ट्रियसंस्कृतविद्यापीठस्य त्रैमासिकी शोधपत्रिका "शोधप्रभा"। इयं विगतेभ्यः द्विचत्वारिंशद्वर्षेभ्यः नैरन्तर्येण मौलिकोत्कृष्टान्वेषणान्वितशोधपत्रप्रकाशनपरायणा अनुसन्धानक्षेत्रे विशिष्टं स्थानं बिभर्ति। पत्रिकेयं संस्कृतविदुषामनुसन्धित्सूनां छात्राणाञ्च चिन्तनप्रकर्षप्रकाशनाय अनुद्घाटितज्ञानवैभवस्योद्घाटनाय महोपकारिकेति मे दृढीयान् विश्वासः।

शोधप्रभायाः प्रकृतेऽस्मिन्नङ्के नैकविधविषयगाम्भीर्यमण्डिताः द्वादशशोधनिबन्धाः प्रकाश्यन्ते। प्रखरप्राञ्जलप्रतिभासम्पन्नैः नदीष्णैः सुधीभिः अनुसन्धानपद्धतिमाश्रित्य तत्तद्विषयेषु गवेषणापूर्वकं मौलिकमपूर्वञ्चान्वेषणमनुष्ठितम्। अनुसन्धानपथि प्रवृत्तानामाचार्याणामनुसन्धातॄणाञ्च प्रतिभाप्रगल्भेन शोधप्रभायाः 'प्रभा' सर्वत्र विलसत्विति कामयानोऽहं निकषधिषणापूरितविषयवस्तुजातस्य प्रकाममुद्बोधनाय सम्प्रार्थये सरस्वतीसपर्यापरान् सुमनसः मनीषिणः।

**डॉ. शिवशङ्करमिश्रः**
सहाचार्यः, शोधप्रकाशनविभागस्य

# विषयानुक्रमणिका

## संस्कृतविभागः



## हिन्दी विभाग



## English Section

ISSN - 0974-8946 शोधप्रभा
अप्रैल-जून, 2017 वर्षः 42, द्वितीयाङ्कः

# वैदिक-स्वर-विषयिणी शास्त्रीय-दृष्टिः

डॉ. रणजितबेहेरा*

## प्रथमो भागः

भारतीय-प्राचीन-वाङ्मये वेदानां स्थानं सर्वप्रथमं स्वीक्रियते। प्राचीनपरम्परानुसारं वेदः सर्वासां विद्यानामाकरो वर्तते। आधुनिककाले संस्कृतवाङ्मये उपलब्धेषु सर्वेषु ग्रन्थेषु स्वीकृतं यत् तत्र प्रतिपादितानां विद्यानां मूलस्रोतः वेद एव। ऋषिदृष्टमन्त्राणां संकलनं वेदेषु वरीवर्तते। कोऽपि जनः वैदिकमन्त्राणां व्याख्यां स्वेच्छया कर्तुं दुःसाहसं न करिष्यतीत्येदर्थमृषिभिः सुरक्षायाः विविधा उपायाः प्रकल्पिताः सन्ति। तदनुसारं वेदस्य एकोऽपि वर्णः स्वोच्चारणस्थानात्परिवर्तयितुं न शक्यते। उपायेष्वेषु जटा-माला-शिखा-रेखादयः पाठाः मुख्याः सन्ति। वैदिकभाषामाश्रित्य नैकाधिका ग्रन्था विरचिताः संकलिताश्चापि। वेदानां गूढतमज्ञानार्जनाय मन्त्रद्रष्टृभिः ऋषिभिरनेकानि शास्त्राणि विरचितानि, येषु वेदांगानि प्रमुखानि विद्यन्ते। षट्सु वेदाङ्गेषु व्याकरणं सर्वप्रथमं स्वीक्रियते। व्याकरणे निहितावयवभूतेन स्वरशास्त्रेण वेदार्थस्य सूक्ष्मतमोऽभिप्रायोऽवगन्तुं शक्यते। वेदानां यथार्थज्ञानाय यानि साधनान्युपलभ्यन्ते, तेषु स्वरशास्त्रं प्राथम्येन स्वीक्रियते। समुचित-स्वरज्ञानं विना मन्त्राणामभिप्रेतोऽर्थो न प्रतीयते। स्वरशास्त्रस्योपेक्षाकरणादनेकेषु स्थानेष्वनर्थो विहितः। एतदर्थं वेदज्ञानाय स्वरस्य महन्महत्त्वं विद्यते। वैदिकवाङ्मयस्यावलोकनानन्तरमेतत्प्रतीयते यदुदात्तादयः स्वरा वैदिकसंहितासु समुपलभ्यन्ते। संहिताः विहाय ब्राह्मणादिषु वैदिकग्रन्थेष्वप्युदात्तादयः स्वराः संदृश्यन्ते। शोधपत्रेऽस्मिन् स्वरशास्त्रदृष्ट्या मन्त्रार्थविमर्शविषये सम्यक् विश्लेषणं विधीयते।

### 1. स्वरपरिचयः

'स्वयं राजन्त इति स्वराः, अन्वग्भवति व्यञ्जनम्'[1] इति स्वरशब्दाय प्रतिपादितं महाभाष्यकारेण पतञ्जलिना। यदि यः कोऽपि वर्णोऽन्यवर्णस्य सहायतां विना उच्चार्यते, तर्हि स स्वर इत्युच्यते। स्वरविषये महाभाष्यकारस्येयं व्याख्या सर्वथा उपयुक्ता, यतोहि सर्वेषु वर्णेषु स्वरः प्रधान इति। स्वरवर्णानामुच्चारणेऽन्यवर्णस्यापेक्षा नानुभूयते, परं स्वरवर्णैर्विना व्यञ्जनवर्णाः नोच्चार्य्यन्ते। सिद्धान्तकौमुद्यामपि माहेश्वरसूत्रेभ्योऽनन्तरं 'हकारादिष्वकार उच्चारणार्थः' इत्युक्त्वा भट्टोजिदीक्षितेनाप्येवं प्रतिपादितमस्ति।

---

* एसोसिएट प्रोफेसर, संस्कृतविभागः, दिल्ली-विश्वविद्यालयः, दिल्ली-110007

1. महा., 1.2.29.

ऋग्वेदेऽपि स्वरशब्दो वागर्थे प्रयुक्तो वर्तते।[1] 'स्वरोपेते शब्दवति' इत्येवमुक्त्वा सायणाचार्येण अस्य अर्थः स्वैर्युक्तं शब्दात्मकं वाक्यमिति कृतः। अनेकेषु ग्रन्थेषु स्वरशब्दो वर्णविशेषस्य कृते प्रयुक्तः, यस्योच्चारणार्थमन्यवर्णस्यावश्यकता नानुमीयते, यथा–

**एते स्वराः।[2] इति स्वराः।[3] षोडशादितः स्वराः।[4]**

वैदिक-लौकिकसाहित्येषु 'स्वर'शब्दः प्रायशोऽनेकेष्वर्थेषु समान एव। परन्तु पाणिनीयशिक्षानुसारं स्वराः प्राचीनकाले उदात्तानुदात्तस्वरितरूपेण प्रयुक्ता अभूवन्।[5] √स्वृ (शब्दोपतापयोः) धातोः करणार्थे घ/अच्प्रत्ययेन निष्पद्यते स्वरशब्दोऽसौ। 'स्वर्यन्तेऽर्थाः एभिः' इत्यनया व्युत्पत्त्या अमरकोशकारोऽपि अर्थावबोधनाय स्वर उच्चार्यते इति प्रमाणयति। ऋक्प्रातिशाख्यानुसारम् अ, आ, ऋ, ॠ, इ, ई, उ, ऊ, ए, ऐ, ओ, औ इत्येते स्वरवर्णाः स्वीक्रियन्ते।[6] लौकिकसाहित्ये एतेषां स्वरवर्णानां प्रयोगः बहुलतया भवति। परन्तु वेदग्रन्थेष्वेतेषां स्वरवर्णानां व्यवहारः विशेषेण उदात्तादिस्वराणामुच्चारणाय भवति यतो हीमे स्वरा अक्षराणामुपरि आश्रिताः।[7] ऋक्प्रातिशाख्ये स्वरस्य कृते 'स्वार' इत्यस्य प्रयोगोऽप्युपलभ्यते।[8] 'स्वार'शब्दोऽपि √स्वृ-धातोः घञ् प्रत्ययेन निष्पद्यते। किन्तु उभयोरर्थः समान एव। निघण्टुग्रन्थेऽपि 'स्वरित'पदं गत्यर्थक-आख्यातपदे पठितम्।[9] अनेनेदं प्रतीयते यत् वेदमन्त्राणामुच्चारणार्थमथ च वैदिकपदानामर्थनिर्धारणाय उदात्तादयः स्वराः प्रयुज्यन्ते।

### 1.1 स्वरस्य भेदाः

वर्णोच्चारणं येन माध्यमेन क्रियते स स्वर इत्युच्यते। त एव स्वराः– अ, आ, इ, ई, उ, ऊ, ऋ, ॠ, लृ ए, ऐ, ओ, औ इति। पाणिन्यनुसारमेते वर्णाः 'अच्'संज्ञकाः भवन्ति।[10] एतेषां स्वराणामुच्चारणविधयः विभिन्नाः भवन्ति। एक एव स्वरः विभिन्नेभ्यः स्थानेभ्यः उच्चारितो भवति। उच्च-नीच-मध्यमरूपेणोच्चारणं स्वरस्य धर्म इति स्वीक्रियते। धर्म-धर्मि-सम्बन्धात्स्वरधर्मोऽयं स्वर इत्युच्यते। अतः स्वरधर्मस्य यत्स्वरत्वं वर्तते तत् लाक्षणिकमिति।[11]

---

1. ऋ., 8,72.2 : दुहन्ति सप्त एकाम् उप द्वा पञ्च सृजतः। तीर्थे सिन्धोः अधि स्वरे।।
2. ऋ प्रा., 1.3.
3. वा.प्रा., 8.6.
4. तै.प्रा., 1.5.
5. पा.शि., 3.11 : उदात्तश्चानुदात्तश्च स्वरितश्च स्वरास्त्रयः। ह्रस्वो दीर्घः प्लुत इति कालतो नियमा अचि।।
6. ऋ.प्रा., 1.3. : इति स्वराः।
7. तदेव, 3.2. : अक्षराश्रयाः।
8. तदेव, 3.2. : अतोऽन्यत्स्वरितं स्वारं जात्यमाचक्षते पदे।
9. नि., 2.14.
10. अष्टा., 8.2.1 उपरि भट्टोजिदीक्षितस्य व्याख्या, प्रथमो भागः पृ. 9. अचः स्वराः।
11. चौबे व्रजबिहारी : वैदिक-स्वर-बोधः, पृ. 1.

वैदिकस्वराणां संख्याविषये विदुषां वैमत्यं वरीवर्तते। विभिन्नैराचार्यैः सप्त, पंच, चत्वार, त्रय, द्वे, एक इत्येवंविधा स्वराः स्वीकृताः। वैदिकवाङ्मये गेयकारणात् प्रयुक्ताः स्वराः मुख्यतः त्रिविधाः स्वीक्रियन्ते, त एव उदात्तानुदात्तस्वरिताश्चेति। एते त्रयः स्वराः त्रैस्वर्यरूपेण गृह्यन्ते। वेदमन्त्रोच्चारणसमये एतेषां त्रैस्वर्याणां विधानमुपलभ्यते। एतेभ्यो भिन्नः केनचिच्च प्रचय एकश्रुतिः वा चतुर्थस्वररूपेण स्वीक्रियते।[1] वस्तुतः त्रयः स्वरा एव स्वीकृताः। परन्तु कतिपयैः आचार्यैः विभिन्नरीत्या तेषां संख्या सप्त वा पञ्च वा चत्वारो वा त्रयो वा द्वे वा एको वा स्वीकृता। तेषां मतान्यत्र विविच्यन्ते-

## (क) एकः स्वरः

कतिपयेषु वैदिकग्रन्थेषु एकस्वरस्य विधानं विहितमस्ति। स्वरोऽयं तानस्वर इत्यभिधीयते। अस्य भेदद्वयं वर्तते, तानस्वरः[2] प्रावचनस्वरश्चेति।[3] वाजसनेयि- प्रातिशाख्ये जप-साम-न्यङ्खव्यतिरिक्तेषु मन्त्रेषु एकः स्वरः उपलब्धः, अर्थात् यज्ञकर्मणि एकस्यैव स्वरस्य आवश्यकतानुभूयते। अतः जप-साम-न्युङ्खेषु तानस्वरः न भवति। साम्नः सम्बन्धः गेयमानैः मन्त्रवाक्यैः सह भवति। जपः 'विश्वे देवाः शृणुत' इत्यादिभिः मन्त्रैः सह सम्बद्धः तथा न्यूङ्खः ऋग्वेदे प्रसिद्धो वर्तते।[4]

वाजसनेयि-प्रातिशाख्ये तान-स्वरोऽयं विकल्पेन याजुषि 'प्रावचन'रूपेण संगृहीतः।[5] अस्य सूत्रस्य व्याख्यायामुव्वटाचार्येण 'प्रावचनः' इत्येतद् आर्षपाठः निगदितः। आर्षपाठेषु विहितः स्वरः प्रावचनस्वरः भवति। विकल्पेन एषः तानस्वरोऽप्युच्यते अर्थात् उदात्त-अनुदात्त-स्वरितादयः त्रयः स्वराः प्रावचनस्वराः स्वीक्रियन्ते। परन्तु यज्ञकर्मणि एकश्रुति(तान)स्वरार्थ विकल्पेन प्रावचनस्वरस्य विधानं विहितम्।[6] अत एव प्रतीयते यत् प्रावचनस्वरः त्रैस्वराद् भिन्नो भवति।[7] वार्तिककारेण कात्यायनेनापि विषयेऽस्मिन् सविस्तरं विवेचितं, येन ज्ञायते तान एकश्रुतिस्वर इति।[8]

## (ख) द्वौ स्वरौ

वाजसनेयिप्रातिशाख्ये स्वरद्वयमुपलभ्यते[9], उदात्तानुदात्तश्चेति। 'द्वौ' इत्यस्य सूत्रस्य व्याख्यायामुव्वटाचार्येण लिखितं यत्- 'किमविशेषेण यजुर्वेदे त्रीन् स्वरानाह। नेत्युच्यते द्वौ स्वरावुदात्तानुदात्तौ

---

1. तदेव।
2. भा.सू., 3. 28-29 : तानोऽन्येषां ब्राह्मणस्वरः तान एवांगोपांगानां तान एवांगोपांगानामिति।
3. ना. शि., 1-28 : विंर्ठ शतिर्मध्यमग्रामे षड्जग्रामे चतुर्दश।
   तानान् पंचदशेच्छन्ति गान्धारग्राममाश्रितान्।।
4. वा.प्रा., 1.131 : सामजपन्यूङ्खवर्जम्।
5. तदेव, 1.132 : प्रावचनो वा यजुषि।
6. तदेव।
7. वा.प्रा., 1.132 उपरि उव्वटस्य व्याख्या।
8. पाण्डेयः सुरेशप्रकाशः ऋक्तन्त्रः रू एक परिशीलन, पृ. 117
9. वा.प्रा., 1.129 : द्वौ।

भाषिकलक्षितौ शतपथब्राह्मणे आहुः। उदात्तानुदात्तौ द्वावेव स्वरौ यजुर्वेद इत्यन्ये'।[1] अनेन परिलक्ष्यते यत् शतपथब्राह्मणे द्वौ स्वरौ प्रयुक्तौ। ताण्ड्य-भाल्लवी-ब्राह्मणयोः स्वरविधानं शतपथब्राह्मणवत् वर्तते।[2] कतिपयानामाचार्याणां मते यजुर्वेदेऽपि उदात्तानुदात्तयोः प्रयोगः समुपलब्धः। एतत् स्वरद्वयं भाषिकस्वरो गाथा-स्वरो वा उच्यते।[3]

### (ग) त्रयः स्वराः

वेदानां विभिन्नानां संहितानां शाकल-माध्यन्दिन-काण्व-कौथुमशाखासु उदात्तानुदात्तस्वरितादयः त्रयः स्वराः स्वीकृताः।[4] माध्यन्दिन-काण्वसंहिताभ्यां सह सम्बद्धस्य वाजसनेयिप्रातिशाख्यस्य 'त्रीन्' इत्यनेन सूत्रेण उदात्तादयः त्रयः स्वराः निर्दिष्टाः सन्ति।[5] ऋग्वेद-प्रातिशाख्येऽपि त्रयाणां स्वराणां सत्ता स्वीकृता वर्तते।[6] कतिपयेषु शिक्षाग्रन्थेष्वपि त्रयः स्वराः सविशदं निर्दिष्टाः, यथा-नारदीयशिक्षा-[7] याज्ञवल्क्यशिक्षा[8]-पाणिनीयशिक्षा[9]-वर्णरत्न-प्रदीपिकाशिक्षादयः[10] प्रमुखाः सन्ति। तैत्तिरीयप्रातिशाख्येऽपि द्वितीय-प्रथम-कृष्टादयः स्वराः वर्णिताः।[11] पाश्चात्यविद्वांसौ मैक्डानलः ह्विटनी च उदात्तादीन् त्रीन् स्वरान् स्वीकृतवन्तौ।[12]

यद्यपि ऋग्वेदसंहितायाः शाखास्वपि प्रचयस्वरस्य प्रयोगः दृश्यते, तथाऽपि तत्र हस्तचालनदृष्ट्या मन्त्राणामुच्चारणाय त्रयाणां स्वराणां मान्यता स्वीकृता। प्रचयाः स्वतन्त्रा इत्यस्मात्कारणात् भिन्नस्वररूपेण स्वीकर्तुं न शक्यते। अतः विभिन्नैः सम्प्रदायैः प्रमुखाः त्रयः स्वराः स्वीकृताः।[13]

### (घ) चत्वारः स्वराः

कतिपयानामाचार्याणां मतानुसारमुदात्तानुदात्त-स्वरित-प्रचयरूपेण चत्वारः प्रमुखाः स्वराः भवन्ति। तैत्तिरीयप्रातिशाख्ये चत्वारः स्वराः स्वीकृताः।[14] अनन्तभट्टस्य मतेन तैत्तिरीयचरणस्य औखेय-

1. वा.प्रा., 1.129 : उपरि उव्वट-अनन्तभट्टयोः व्याख्या।
2. भा.सू., 3.15 : शतपथवत्ताण्डिभाल्लविनां ब्राह्मणस्वरौ।
3. प्रति. परि., 1.82 : ब्राह्मणे तूदात्तानुदात्तौ भाषिकस्वरौ।
4. चौबे व्रजबिहारी: वैदिक-स्वर-बोधः, पृ. 12.
5. वा. प्रा., 1-108 : उच्चौरुदात्तः।
6. ऋ.प्रा., 3.1: उदात्तानुदात्तश्च स्वरितश्च त्रयः स्वराः।
   आयामविश्रम्भाक्षेपैस्त उच्यन्ते।।
7. ना. शि., 8.1: ------- उदात्तश्चानुदात्तश्च तृतीयः स्वरितः स्वरः।
8. या. शि., 1: उदात्तानुदात्तश्च स्वरितश्च तथैव तत् --------।
9. पा. शि., 1: उदात्तानुदात्तश्च स्वरितश्च स्वरास्त्रयः।
10. व. र. प्र. शि., 86 : स्वर उच्चः स्वरो नीचः स्वरः स्वरित एव च।
    स्वरप्रधाने त्रैस्वर्यं व्यञ्जनं तेन सस्वरम्।
11. तै. प्रा., 23.15 : द्वितीय-प्रथम-कृष्टास्त्रय आहारकस्वराः।
12. ए. ए. मैक्डानल, वैदिकव्याकरणम्, अनु. डॉ. सत्यव्रतशास्त्री, पृ. 597
13. पाण्डेयः सुरेशः : ऋक्तन्त्र : एक परिशीलन, पृ. 118.
14. तै. प्रा., 23.20 : तच्चतुर्थमभित्युक्तम्।

खाण्डिकेयशाखयोः केषुचित् स्थानेषु चत्वारः स्वराः आसन्।[1] कृष्ट-प्रथम-द्वितीय-तृतीय-चतुर्थ-मन्द्र-अतिस्वोर्येत्येतेषां सप्त-यमानां वर्णनसमये तैत्तिरीयप्रातिशाख्ये उक्तं यत् - मन्द्र-चतुर्थ-तृतीय-द्वितीय इत्येते चत्वारः यमाः (स्वराः) तैत्तिरीयकाः वर्तन्ते। एतेषु चतुर्षु यमेषु द्वितीय-मन्द्र-तृतीय-चतुर्थ इत्येते क्रमादुदात्तानुदात्त-स्वरित-प्रचयरूपेण प्रतिजानीयुः।[2] पाणिनीय-शिक्षायामप्यु- दातानुदात्त-स्वरित-प्रचय इत्येतेषां चतुर्णां स्वराणां सस्थानं विवेचनमुपलभ्यते। एतदनुसारमप्यनुदात्तो हृदि, उदात्तो मूर्धनि, स्वरितः कर्णमूले, प्रचयो मुखे च ज्ञेयाः।[3]

## (ङ) पञ्च स्वराः

नारदीयशिक्षायां पञ्चस्वरविधानमुपलभ्यते। इमे पञ्च स्वराः भवन्ति - उदात्त-अनुदात्त-स्वरित-प्रचय-निघातश्चेति। अस्यां शिक्षायामनुदात्तः निघातश्चेत्येतद् द्वयमेकस्मिन्नेवार्थे प्रयुक्तमस्ति। साधारणतः निघातशब्दोऽनुदात्तस्यार्थे प्रयुज्यते। पुनश्चात्रोल्लिखितं यदनुदात्तः उदात्त-स्वरितयोरनन्तरं स्थितेऽपि एकश्रुतिः न भूत्वा अनुदात्तो भवति। एतदष्टाध्याय्यामनुदात्ततरः सन्नतरो वा कथितः।[4]

## (च) सप्त स्वराः

महाभाष्यकारेण पतञ्जलिना महाभाष्ये सप्त स्वराः विविक्ताः। त एव स्वराः सन्ति उदात्त-उदात्ततर-अनुदात्त-अनुदात्ततर-स्वरित-स्वरितानन्तरमुदात्त- एकश्रुतिश्चेति।[5] वाजसनेयिप्रातिशाख्येऽपि सप्त स्वरा उक्ताः।[6] सप्त-स्वर- विधायक- सूत्र-व्याख्यासमये उव्वटेनोल्लिखितं यत् सामवेदे षड्ज-ऋषभ-गान्धार-मध्यम- पञ्चम-द्धैवत-निषादादयः सप्त स्वराः भवन्ति। अध्वर्युकृते यजुर्वेदे सामगानं विहितमस्ति। अतः षड्जादिस्वराणां ज्ञानमध्वर्योः कृते अनिवार्यमिति। कतिपयविदुषां मतेन जात्य-अभिनिहित-क्षैप्र-प्रश्लिष्ट-तैरोव्यञ्जन-तैरोविराम-पादवृत्तादयः सप्त स्वरा अवबोधनीयाः।[7] वाजसनेयि-संहितायां ताथाभाव्यस्वरस्याभावो दरीदृश्यते।

एवंविधेषु वैदिकग्रन्थेषु स्वराणां प्राधान्याप्राधान्यविषये वैमत्यमुपलभ्यते। परं बहुषु स्वरेषु मुख्यतया उदात्त-अनुदात्त-स्वरितादयः त्रयः स्वराः स्वीकृताः। एतदपि नारदीय[8]-याज्ञवल्क्य[9]-शिक्षाग्रन्थयोः पुष्टं भवति।

1. भा. सू., 3.27 : तेषां खाण्डिकेयौखेयानां चातुःस्वर्यमपि क्वचित्।
2. तै. प्रा., 23.16 : मन्द्रादयो द्वितीयान्ताश्चत्वारस्तैत्तिरीयकः।
3. पा. शि., 48 : अनुदात्तो हृदि ज्ञेयो मूर्धन्युदात्त उदाहृतः।
4. अष्टा., 1.2.40 : उदात्तस्वरितपरस्य सन्नतरः।
5. महा., 1.2.33 : त एते तन्त्रेतरनिर्देशे सप्त स्वराः भवन्ति। उदात्तः। उदात्ततरः। अनुदात्तः। अनुदात्ततरः। स्वरितः। स्वरिते य उदात्तः सोऽन्येन विशिष्टः। एकश्रुतिः सप्तमः।
6. वा. प्रा., 1.127.
7. ना. शि., 8.10 : जात्यः क्षैप्रोऽभिनिहितस्तैरोव्यञ्जन एव च।
   तैरोविरामः प्रश्लिष्टः पादवृत्तयश्च सप्तमः।
8. तदेव, 8.1 : अत ऊर्ध्वं प्रवक्ष्याम्याच्चिर्कस्य स्वरत्रयम्।
   उदात्तश्चानुदात्तश्च तृतीयः स्वरितः स्वरः।
9. या. शि., 118 : स्वर उच्च स्वरो नीचः स्वरः स्वरित एव च। स्वरप्रधानं त्रैस्वर्यं व्यञ्जनं तेन सस्वरम्।

**2. प्रातिपदिकं प्रत्ययस्वरश्च**

सामान्यतया धातुप्रत्यययोः संयोगेन प्रातिपदिकं निष्पद्यते। पदस्वरस्य सामान्यनियमानुसारमुदात्तस्वरो धात्वंशे, प्रकृत्यंशे, प्रत्ययांशे वा भवति, यतो हि द्वयं मूलतः पदं वर्तते। परन्तु द्वयोः संयोगादनन्तरं कदाचित् धातोः उदात्तस्य लोपः जायते कदाचित्तु प्रत्ययांशोदात्तस्य लोपः। साधारणतः पूर्व-स्वरस्यापेक्षया उत्तरस्वरः बलवान् भवति, अतः उत्तरस्वरोऽवशिष्टरूपेण तिष्ठति।[1]

सामान्यतः प्रत्यया आद्युदात्ताः भवन्ति। प्रत्ययः येन धात्वंशेन सह प्रयुज्यते तत्र प्रत्ययस्य आदिवर्ण उदात्तो भवति,[2] यथा- कृ + तव्यं = कर्तव्यम्।

प्रत्ययानां स्वर-विषयक-वैशिष्ट्यं प्रतिपादयताऽऽचार्येण पाणिनिना केचनानुबन्धाः प्रयुक्ताः सन्ति। एताननुबन्धानाधृत्य तैः प्रत्ययस्वराः निर्धारिताः। प्रत्ययानां कांश्चन प्रमुखानुबन्धानवलम्ब्य तेषां स्वरवैशिष्ट्यमधः प्रदीयते -

**(क) कित्प्रत्ययस्वरः**

येषां प्रत्ययानामन्ते प्रयुक्तः क-अनुबन्ध इत्संज्ञकः भवति, तेन निष्पन्नः शब्द अन्तोदात्तः भवति, यथा- अर्जुन + ढक् = आर्जुनेयः।

**(ख) चित्प्रत्ययस्वरः**

येषां प्रत्ययानामन्ते प्रयुक्तः च-अनुबन्ध इत्संज्ञकः भवति,[3] तेन निष्पन्नाः शब्दाः अन्तोदात्ताः भवन्ति,[4] यथा-

यशस् + अच् = यशस। भू + इमनिच् = भूमन्। सरण + क्यच् = सरण्य।

चित्स्वरस्य कतिपया अपवादा अप्युपलभ्यन्ते, यथा-

(i) 'शानच्'प्रत्ययान्तः इन्धान'शब्दः चित्स्वरत्वादन्तोदात्तः भवेत् किन्तु विकल्पेन एषः आद्युदात्तः भवति,[5] यथा-इन्धानः इन्धानः।

(ii) यदा 'शानच्'प्रत्ययः आत्मनेपदी-धातुभिः सह प्रयुज्यते, तदा तेन निष्पन्नः शब्दः अन्तोदात्तः न भूत्वा आद्युदात्तः भवति,[6] यथा- वर्तमानः, शयानः, वर्धमानः इत्यादयः।

**(ग) ञित्-नित्-प्रत्ययस्वरः**

येषां प्रत्ययानामन्ते प्रयुक्तौ 'ञ्', 'न्' अनुबन्धौ इत्संज्ञकौ भवतः, तेन प्रत्ययेन निष्पन्नः शब्दः आद्युदात्तः भवति,[7] यथा-

---

1. अष्टा., 6.1.158 उपरि वार्तिकम् - सति शिष्टस्वरबलीयस्त्वमन्यत्रविकरणेभ्यः इति वाच्यम्।
2. तदेव, 3.1.3: आद्युदात्तश्च।
3. तदेव, 6.1.165: कितः।
4. तदेव, 6.1.163: चितः।
5. तदेव, 6.1.215: विभाषा वेण्विन्धानयोः।
6. तदेव, 6.1.186: तास्यनुदात्तेन्ङिद्दुपदेशाल्लसार्वधातुकमुदात्तमह्निवङोः।
7. तदेव, 6.1.197 : ञ्नित्यादिर्नित्यम्।

कवि + ष्यञ् = काव्यं । गन्तृ + इष्ठन् = गमिष्ठ।

ञित्-नित्-प्रत्ययस्वरयोरपि केचन अपवादा उपलभ्यन्ते, यतो ह्यनेन संयोगेन निष्पन्नाः शब्दाः आद्युदात्ता न भूत्वा अन्तोदात्ताः भवन्ति, त एव शब्दाः एवं भवन्ति-

(i) √कृष् धातुना आकारयुक्तधातुना च सह घञ्-प्रत्ययसंयोगेन निष्पन्नः शब्दः अन्तोदात्तः भवति,[1] यथा- कर्षः, पाकः।

(ii) उञ्छादिगणे पठिता अनेके शब्दाः अन्तोदात्ताः भवन्ति,[2] न त्वाद्युदात्ता, यथा- युगानि (√युज् + घञ्)।

(iii) क्तिन् प्रत्ययेन निष्पन्नाः ऊति-यूति-जूति-साति-हेति-कीर्ति-आदयः शब्दाः नित्प्रत्ययत्वादाद्युदात्तत्वं प्राप्ते सति अन्तोदात्ताः भवन्ति।[3]

(iv) वैदिकमन्त्रेषु वृष-इष्-पच्-मन्-विद्-भू-रा-आदिभिः धातुभिः सह क्तिन्प्रत्ययस्य संयोगेन निष्पन्नाः वृष्टि-दृष्टि-पंक्ति-मति-वित्ति-भूति-राति-आदयः शब्दाः नित्स्वरत्वादपि अपवादेन अन्तोदात्ताः भवन्ति।[4]

(v) त्यागं-रागं-हासं-आदयः शब्दाः घञ्प्रत्ययेन निष्पन्नत्वादपि विकल्पेन आद्युदात्ताः भवन्ति।[5]

(vi) 'वेणु' शब्दः नित्प्रत्ययत्वात् आद्युदात्तः भवेत् परमेषोऽपि विकल्पेन आद्युदात्तो भवति।[6]

(vii) ज्येष्ठकनिष्ठशब्दौ इष्ठन्प्रत्ययत्वात् नित्स्वरेण आद्युदात्तौ भवेताम्। परन्त्वेतयोः आद्यन्तोदात्तयोः रूपमुपलभ्यते। यदा एते वयसा ज्येष्ठ-कनिष्ठ-वाचकाः ज्ञापकाः वा भवन्ति, तदा अन्तोदात्ताः[7] भवन्ति, अन्यथा आद्युदात्ताः वर्तन्ते, यथा- ज्येष्ठः, कनिष्ठः, ज्येष्ठः, कनिष्ठः।

**(घ) तित्प्रत्ययस्वरः -**

येषां प्रत्ययानामन्ते प्रयुक्तस्य प्रत्ययस्य 'त्'अनुबन्ध इत्संज्ञको भवति, तेषां प्रत्ययानां संयोगेन निष्पन्नाः शब्दाः स्वरितान्ताः भवन्ति,[8] पुनश्च एते जात्यस्वरिता उच्यन्ते, यथा-

असुर + यत् = असुर्य । कर्मन् . यत् = कर्मण्यं।

तित्स्वरस्यापि कतिपया अपवादाः उपलभ्यन्ते, यथा-

---

1. तदेव, 6.1.159 : कर्षात्वतो घञोऽन्त उदात्तः।
2. तदेव, 6.1.157 : उञ्छादीनां च।
3. तदेव, 3.3.97 : ऊतियूतिजूतिसातिहेतिकीर्तयश्च।
4. तदेव, 3.3.96 : मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः।
5. अष्टा., 6.1.216 : त्यागराहासकुहश्वठक्रथानाम्।
6. तदेव, 6.1.215 : विभाषा वेण्विन्धानयोः।
7. फि. सू., 22 : ज्येष्ठकनिष्ठयोर्वयसि।
8. अष्टा., 6.1.185 : तित्स्वरितम्।

(i) नौशब्दं परित्यज्य यत्प्रत्ययान्ताः द्व्यच्शब्दाः स्वरितान्ता: न भूत्वा आद्युदात्ताः भवन्ति,[1] यथा- देयं। परं नौशब्दोऽस्यापवादो वर्तते। अतः अनेन शब्देन सह 'यत्'-प्रत्ययः प्रयुक्ते सति द्व्यच्त्वादपि नौ + यत् = 'नाव्य' शब्दः स्वरितान्तः भवति।

(ii) यदि यत्प्रत्ययान्तशब्दः त्र्यक्षरयुक्तः स्यात्, तर्हि स शब्दः सामान्यतः स्वरितान्तः भवति, यथा- अवट् + यत् = अवट्यं।

(iii) ईड्-वन्द्-कृ-शंस्-दुह्-धातुभिः सह ण्यत्प्रत्ययेन निष्पन्नः शब्दः स्वरितान्तो न भवति,[2] यथा-ईड्यं, वन्द्यं, वार्यं, शस्यं, दोह्यं च आदयः।

**(ङ) पित्प्रत्ययस्वरः**

येषां प्रत्ययानां 'प्'अनुबन्ध इत्संज्ञकः वर्तते, तेभ्यः प्रत्ययेभ्यः निष्पन्नानां शब्दानां समग्रप्रत्ययांशः अनुदात्तः भवति,[3] यथा- रत्नधा + तमप् = रत्नधातमं।

**(च) रित्प्रत्ययस्वरः**

येषां प्रत्ययानां 'र'अनुबन्ध इत्संज्ञकः भवति, तेषां प्रत्ययानां संयोगेन निष्पन्नानां शब्दानामुपधास्थितवर्ण उदात्तो भवति,[4] यथा-

दृश् + अनीयर्= दर्शनीयः। आ हु + अनीयर्= आहवनीयः।

**(छ) लित्प्रत्ययस्वरः**

येषां प्रत्ययानां 'ल्' अनुबन्ध इत्संज्ञकः विद्यते, तेषां प्रत्ययानां संयोगेन निष्पन्नाः शब्दाः प्रत्ययात्पूर्वमुदात्तस्वरयुक्ताः भवन्ति,[5] यथा-

देव + तल् = देवतां

पूर्व + थाल् = पूर्वथां

परन्तु अभ्यस्तधातुभ्यः णमुल्प्रत्ययेन निष्पन्नः शब्दः विकल्पेनाद्युदात्तोऽपि भवति।

उपर्युक्तेभ्यः इत्संज्ञकानुबन्धप्रत्ययेभ्यः विना कस्याप्यजन्तप्रत्ययस्य संयोगेन निष्पन्नेषु शब्देषु यद्यपि कस्यापि विशेषनियमस्य उल्लेखो न क्रियते, तथापि उदात्तस्वरः प्रत्ययस्य आद्यच्वर्णस्योपरि तिष्ठति, यथा- अग् + नि = अग्निः।

*(शोधनिबन्धस्यावशिष्टभागः शोधप्रभाया अग्रिमेऽङ्के आगमिष्यति।)*

---

1. तदेव, 6.1.213 : यतोऽनावः।
2. तदेव, 6.1.214 : ईडवन्दवृशंसदुहां ण्यतः।
3. तदेव, 3.1.4 : अनुदात्तौ सुप्पितौ।
4. तदेव, 6.1.217 : उपोत्तमं रिति।
5. तदेव, 6.1.193 : लिति।

ISSN - 0974-8946 शोधप्रभा
अप्रैल-जून, 2017 वर्ष: 42, द्वितीयाङ्क:

# संस्कृतवाङ्मये पशु-पक्षिविज्ञानम्

डॉ.शिवशङ्करमिश्र:*

वृक्ष-तरु-गुल्म-लता-पशु-पक्षि-कृमिप्रभृतिजीवजन्तव:-अनादिकालतोऽस्य ब्रह्माण्डस्य महतरहस्यभूता:। अस्माकं वेद-पुराणेतिहास-धर्मशास्त्र-साहित्यकाव्यकलात्मकसकल-संस्कृतवाङ्मयेषु जैविकजगतविषये विविधप्रकारकं ज्ञानं समुपलभ्यते। यथा तेषां वर्गविभाग:, तेषां स्वभाव:, तेषां निवास:, तेषां विकास: प्रयोगश्च। जैवसम्पदासंरक्षणे तत्गुणस्वभावविषयेऽपि वेदा: अस्मान् सम्बोधयन्ति। प्रस्तुतशोधपत्रे गो-वृषभ-हंस-मयूर-पिक-शारिका-उलूक-श्येन-सिंह-व्याघ्र-गज-गण्डक-क्रमेलका-दिपशुपक्षिजीवनां प्रवृत्तिगुणप्रयोगविभागदिविषयानां प्रकाशनं प्रस्तावितम्।

अस्माकं प्रकृतितादात्म्याभिभूता ऋषयो महर्षयो मनीषिणश्च पशुपक्षिभिर्नितान्तं सुपरिचिता आसन्। समेषां जीवानां सकलगुणवैशिष्ट्यं तैर्विज्ञातम्। प्राचीनभारतीयविद्याकेन्द्रेषु पशुविज्ञानं पक्षिविज्ञानञ्चाध्याप्यमानविषयेषु सम्मिलितमासीत्। महाकविना भवभूतिना एष विषय: पशुसमाम्नाय इति प्रोक्त:। पशूनां वैविध्यं तेषां पालन-पोषण-गुण-स्वरूप-लक्षण-रोगादीनां विषयाणां परिज्ञानं सम्प्राप्यते तत्रत्यै: अध्ययनपरायणैश्छात्रै: इति विज्ञायते।

## आधुनिकवैज्ञानिकप्राणिवर्गविवेचनं पारिस्थितिकी-विभागश्च

आधुनिकप्राणिविज्ञानशास्त्रे जन्तुजगत् 'प्रोटोजोआ, मेटोजोआ' इति संज्ञया भागद्वयेन विभक्तम्। तत्र प्रोटोजोआ वर्गे एककोशीयजीवानां पञ्चाशतसहस्रविधिप्रजातय: सम्प्राप्यन्ते। मेटोजोआ च वर्गे बहुकोशीयजीवानां विभाग:, अर्थात् ये जीवा: विविधलघुकोशिकाभिर्विशिष्टा: सन्ति तेऽस्मिन् वर्गे वर्गीकृता:। द्वितीयमिदं वर्ग विविधेषु संघेषु विभक्तम्, तेषु प्रमुखसंघा: अधोनिर्दिश्यन्ते-

- पोरीफेरा (Porifera)
- सीलेन्ट्रेटा (Coelenterata)
- प्लैटी हेल्मिन्थीज (Platy helminthes)
- निमेटोडा (Nematoda)
- ऐनीलिडा (Annelida)
- आर्थोपोडा (Arthopoda)

---

* सहाचार्य: शोधविभागे, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली-16

- मोलस्का (Mollusca)
- अकाइनोडर्मेटा (Echinodermata)

एवमुक्तप्रकारेण जीवजन्तूनां यो विभागः प्रदर्शितः तदाधुनिकवैज्ञानिकवर्गीकरणराद्धान्तः। पर्यावरणजन्यपारिस्थितिकीविभागक्रमे जल-स्थल-मरुस्थल-नभसामाधारदृष्ट्या समस्तानां प्राणिनां जलीयजन्तु-वाय्यवीयजन्तु-स्थलीयजन्तुमरुस्थलीयजन्तुप्रभेदेन चतुर्धा वर्गीकरणं विहितम्। तत्र जलीयजन्तुवर्गे जलजीविनः मत्स्य-कच्छप-ह्वेल-घडियालप्रभृतयः। वाय्यवीयवर्गे उड्डीयमानाः पक्षिणः। स्थलीयवर्गे उभयचर-सरीसृप-पक्षिप्रभृतयः एवं मरुस्थलीयजन्तुवर्गे रेगिस्ताननिवासिनः जीवजन्तवः यथा- शुतुर्मुर्ग-कंगारू-क्रमेलकादयश्च संगृह्यन्ते।

**संस्कृतवाङ्मये सृष्टिविकासो वर्गीकरणप्रकारश्च**

चतुर्वेदेषु, ब्राह्मणेषु, आरण्यकेषु, उपनिषत्सु पुराणेतिहास-साहित्यकाव्यकलापेषु च पशु-पक्षि-कीट-सरीसृपप्रभृति-जीवानां भूरिशः वर्णनमुपलभ्यते। तत्र तैत्तरीयोपनिषद्गतब्रह्मानन्दवल्याः प्रथमेऽनुवाके सम्पूर्णसृष्टेरुत्पत्तिविषये इयं पंक्तिरुद्घोषिता- ''तस्माद्वा एतस्मादात्मनः आकाशः सम्भूतः। आकाशाद्वायुः। वायोरग्निः। अग्नेरापः। अद्भ्यः पृथिवी। पृथिव्याः ओषधयः। ओषधीभ्योऽन्नम्। अन्नात्पुरुषः। सा वा एष पुरुषोऽन्नरसमयः........।''[1]

अर्थात् परब्रह्मणः प्रथमम् आकाशोत्पत्तिः, अनन्तरं वायुः, ततोऽग्निः, ततो जलं ततः पृथिवी, पृथिव्याः विविधौषधयः, औषधीभ्योऽन्नम्, अन्नेभ्यः पुरुषः उत्पद्यते, एषोऽस्ति पुरुषोत्पत्तिक्रमः। अनन्तरम् अस्मिन्नेवोपनिषदः द्वितीयानुवाके "अन्नाद्वै प्रजाः प्रजायन्ते" इत्यादिना अन्नस्य प्राणिजनकत्वं प्रतिष्ठापितम्।

भारतीयवैदिकधर्मस्य न्यायवैशेषिकपरम्परायामपि जीवनोत्पत्तिस्वरूपस्य विशदं विवेचनं न्यायसिद्धान्तमुक्तावल्याः योनिजादिभवेद्देहमित्यादिकारिकया समुपस्थापितम्। देहं द्विविधं योनिजमयोनिजञ्च। तत्र योनिजं जरायुजाण्डजभेदेन द्विप्रकारकम्, जरायुजन्तावत् मानुष-पशु-मृगादीनां शरीरम्। अण्डजन्तु सर्प-विहंगादीनां कायम्। अयोनिजं स्वेदजोखिजातिकं, स्वेदजन्तावत् कीट-मशक-मत्कुणप्रभृतयः उखिजन्तु तरु-गुल्म-लताप्रभृतय इति। नारकादिशरीरं देवादिशरीरञ्चाप्ययोनिजमेवेति विचारः। इदमेव तथ्यं श्रीमद्भागवतपुराणेऽपि योनिजादिक्रमेण प्रतिपादितम्। पुराणेऽस्मिन् पशूनां शरीरसंरचनामाध्यमेन प्रकारत्रयं प्रकाशितम्, प्रथमम् एकशफवन्तः अश्व-गर्दभाश्वतर-हरिणप्रभृतयः, द्वितीयं द्विशफवन्तः गो-महिषाजा-कृष्णमृगादयः। तृतीयञ्च पञ्चाङ्गुलिवत्वेन नखविशिष्टत्वेन वा सिंह-व्याघ्र-गज-वृक्क-भल्लूक-श्वान-श्रृगालादयः ग्राह्याः। बृहत्संहितायामपि गोऽश्व-श्वान-कुक्कुट-कुञ्जरप्रभृतीनां प्राणिनां शस्यादीनाञ्च विस्तृतं वर्णनं प्राप्यते।

---

1. तै०उप०ब्र०प्र०अ०

महाकविकालिदासेनापि स्वकीये महाकाव्ये नाटकादौ च कृमि-पक्षिप्राणिसस्यानाञ्च यत्र तत्र निरूपणं विहितम्। चरकसंहितायामपि चरकाचार्येण प्राणिनां जन्मानुसारं जरायुजाण्डजस्वेदजोद्भिजरूपेण विभाजनं कृतम्।

अस्माकं सुप्रसिद्धैः प्राच्यैः विद्वद्भिः पशुविज्ञानाय पक्षिपरिचयाय विरचितानि बहूनि पुस्तकानि। यद्यपि वैदेशिकैराक्रमणकारैः अस्माकं प्रचुरं विपुलं च साहित्यं विनष्टम्, सागरे प्रक्षिप्तं, भूमौ विदीरितम्, भ्राष्ट्रेषु भूर्जितम्, पुस्तकानि खण्डशः कृत्वा वीथिषु विक्षिप्तानि तथापि एतावता ग्रन्थविनाशलीलानन्तरमपि सम्प्रत्यपि प्राप्यन्त एव अनेके ग्रन्थाः लेखाः निबन्धाश्च। तत्तत्पशुपक्षिविषयमवलम्ब्य तत्तदाचार्याणां विरचिताः ग्रन्थाः एवं विधाः-

- सोमेश्वरविरचितः – मानसोल्लासग्रन्थः (अत्र मत्स्यविज्ञानसम्बन्धिनो लेखाः)
- कौटिल्यविरिचितम् – अर्थशास्त्रम् (एकस्मिन् प्रकरणे मत्स्यानामार्थिकपक्षविवरणम्)
- वेदव्यासविरचितम् – मत्स्यपुराणम् (अत्र सर्पाणां विस्तरेण विवरणम्)
- नीलकण्ठप्रणीता – मातंगलीला
- पालकविरचिता – हंस्त्यायुर्वेदसंहिता
- शालिहोत्रविरचिता – शालिहोत्रसंहिता (अश्वविज्ञानविषये विचारः)
- नकुलविरचितम् – अश्वशास्त्रम्
- नकुलविरचितम् – अश्वविज्ञानम्
- जयसूरिदत्तविरचितः – अश्ववैद्यकः
- रुद्रदेवविरचितम् – श्येनिकशास्त्रम् (सप्ताध्यायात्मकम्)

संस्कृतसाहित्ये पदे-पदे गो-गज-वाजिनां श्लाघ्यं विवेचनम्। अत्र गौ मातृपदवाच्या भुक्तिमुक्तिप्रदायिनी च सुप्रसिद्धा। गावो विश्वस्य मातरः। गावः स्वर्गस्य सोपानम्। गावः स्वर्गेऽपि पूजिताः। मातरः सर्वभूतानां गावः सर्वसुखप्रदाः। गोभिस्तुल्यं न पश्यामि धनं किंचिदिहाच्युत। न गोभ्यः परमं किंचित् पवित्रं भरतर्षभ। यतो गावस्ततो वयम्।

हस्तिनां वैज्ञानिकविवेचनाय हस्त्यायुर्वेदस्य विकासो बभूव। प्राचीनभारतीयसमाजे हस्तिनो महत्वशालिनोऽवर्तन्त वाहनरूपेण ते प्रयुज्यन्ते स्म। सेनासु तेषां महती ध्रुवमासीदुपयोगिता। चतुरंगिण्यां

सेनायां गजसेना प्रभावशालिन्यवर्तत। अतिभारवतां वस्तूनां नयनं गजानां माध्यमेनैव व्यापारिणः कुर्वन्ति स्म।

रामायण-महाभारतार्थशास्त्र-वृहत्संहिता-शुक्रनीत्यादिग्रन्थेषु हस्तिविज्ञानसम्बन्धिसाहित्यं प्राचुर्येण समुपलभ्यते। रामायणे हस्तिनां विविधवर्गाणां वर्णनानि सन्ति। ऐरावतो नाम दिव्यगजः पुराणेषु वर्णितः। पृथिव्याः चतस्रो दिशः गजा एव धारयन्ति।

पालकाप्यस्य 'हस्तायुर्वेदसंहिता' नीलकण्ठस्य च 'मातंगलीला' स्वतन्त्ररूपेण हस्तिविज्ञानविषयकौ ग्रन्थौ स्तः। हस्त्यायुर्वेदसंहिता सूचयति यत् नरपतिनाङ्गदेशाधिपेन रोमपादेन हस्त्यायुर्वेदविषयः पालकाप्यादधीतः। नैषधीयचरितमहाकाव्ये प्रथमसर्गे महाकविना श्रीहर्षेण निषधदेशाधिपस्य नलस्याश्वविद्यापाण्डित्यं प्रदर्शितम्। महाभारते प्रसिद्धः पाण्डुपुत्रश्चतुर्थो यः पाण्डवो नकुलः सोऽश्वविज्ञानस्य वेत्ता इति विशेषेण महर्षिणा व्यासेन प्रोक्तः।

प्राचीनसमये पक्षिविज्ञानविषयकाः अनेके ग्रन्थाः विरचिताः। संस्कृतभाषायाः शास्त्रीयग्रन्थेषु पक्षिविज्ञानसम्बन्धीनि न्यूनानि तथ्यानि प्रकाशितानि। पक्षिणां भेदविवेचनम्, तेषां पालन-पोषणं, तेषां रोगलक्षणं, रोगनिदानोपायचिन्तनं च विद्वद्भिः बहुधा विवेचितम्।

प्राचीनभारते ऋषीणामाश्रमे मिथो विरुद्धाः जीवाः विरोधशून्यं सन्तः सहैव निवसन्तो दृश्यन्ते। मनोविनोदाय पक्षिणः गृहेषु पाल्यन्ते। पक्षिणां निवासाय भोजनाय विहाराय च आसीत् विशिष्टा व्यवस्था। राजाः स्वगृहे मञ्जूस्थं शुकं स्वयमेव स्वहस्तेन प्रक्षालयति, फलादिकं खादयति, राम राम इति पदं पठनाय प्रेरयति सुन्दरं निरूपितं केनचिद् सुभाषितकारेण-

**वासः काञ्चनपिञ्जरे नृपवरैः नित्यं तनोमार्जनम्,**
**भक्ष्यं स्वादु रसालदाडिमफलं पेयं सुधाभं पयः।**
**वाच्यं संसदि रामनाम सततं धीरस्य कीरस्य भो!**
**हा हा हन्त! तथापि जन्मविटपे क्रोडे मनो धावति।।**[1]

आचार्यमहर्षिणा चरकेण प्रवृत्यनुसारः आहारविहारस्वाभावनुकूलः अधोनिर्दिष्टः पशु-पक्षिविभागः कृतः-

**प्रसहवर्गः**-अस्मिन् वर्गे तथाविधो जीवः परिगण्यते यः स्वशक्त्या संघर्षपूर्वकं भोजनं प्राप्यते, यथा गो-गर्दभ-सिंह-व्याघ्र-ऋच्छवानराश्वाश्वतरोष्ट्र-मूषकमार्जार-श्वानप्रभृतयः श्येन-गिद्ध-काक-भास-कुकरादयश्चापि।

**भूमिशयवर्गः**-भूमौ शेते भूमिशयः, अर्थात् भूगर्भ, भूविवरवासिनः जीवाः वर्गेऽस्मिन् परिगणिताः भवन्ति ते च मण्डूक-सेह-गोह-श्वावित मूषक-सर्पादयः।

---

1. सुभाषितश्लोकः

**वारिशयवर्गः**-वारिणि शेते वारिशयः, अर्थात् जलजीवाः अत्र कच्छप-कर्कट-मत्स्य-शिशुमार-तिमिंगिल-शुक्ति-शंखउद्विलाव-कुम्भीर-मकरप्रभृतयः जीवाः परिगणितुं शक्यन्ते।

**वारिचारिवर्गः**-वारिणि संचरतीति वारिचरः जलसंचरणशीला इत्यर्थः, हंस-क्रौञ्च-वक-वलाक-कारण्ड-वप्लव-शरारी-केशरी-मानतुण्डकमृणालकण्ठमद्गुका-दम्बकाकतुण्डकोत्क्रोशपुण्डरीकाक्ष-चातकजलकुक्कुटसुमुखरोहिणीसारसचातकादयः प्राणिनः एतद्वर्गान्तर्गता संग्राह्याः।

**अनूपदेशवर्गः**-अनूपदेशपशुर्नामजलप्रधानप्रदेशीयाः पशवः, अमुष्मिन् वर्गे गण्डक-महिष-नीलगाय-हस्ति-हिरण्य-वराह-बारहसिंहप्रभृतिपशवः सम्मिलताः भवन्ति।

**जांगलपशुवर्गः**- स्थलोत्पन्नाः सन्तः अरण्यसंचरणशीलाः पशवः जांगलपशुत्वेन प्रसिद्धाः, चित्तल-हिरणशरभ-चारूष्क-एण-शम्बरवरपोतऋष्यप्रभृतयः अत्र संग्राह्याः।

**विष्किरपक्षिवर्गः**-वर्गेऽस्मिन् प्रायः तादृशाः पक्षिणो भवन्ति ये खलु खगाः स्वचञ्चुभिः पादैश्चान्नं विकीर्य अदन्ति, विष्किरत्वेन एषां प्रसिद्धिः। तित्तर-चातकोपचक्र-कुक्कुभ-वर्तक-वर्तिका-मयूर-कुक्कुट-गिरिवर्त-कगोर्नदक्रकरवारटप्रभृतयः अस्य वर्गस्य सदस्याः।

**प्रतुदवर्गः**- प्रतुदवर्गे तादृशानां पक्षिणां समावेशः यैः चञ्चुभिः पादाभ्याञ्चाघातं कृत्वा स्वाहारं खादनानुकूलं सम्पाद्यते। भृंगराजजीवजीवककोकिलकैरातगोपपुत्रप्रियात्मजलट्वावभ्रुवरहाडिण्डि-मानकजटायुलौहपृष्ठवयाकपोतशुकसारंगचिरटीशारिकाकलविंकचटकबुलबुलकपोतादयोऽत्र वर्गीकृताः दृश्यन्ते।

**गुणकर्मप्रवृत्यनुसारं पशुपक्षिविवेचनम्**

* सामान्यतः संस्कृतवाङ्मये समुल्लिखितानां तत्तज्जीवानां वर्गीकरणप्रकारः विशिष्टगुणविशिष्टकर्मप्रवृत्यनुसारेण एवं सम्भाव्यते-

* **ऋतुपरिज्ञानम्** - प्रायशः सर्वेऽपि पशुपक्षिपतङ्गादयः ऋतुपरिवर्तनस्य नितान्तं सूक्ष्मतमं ज्ञानं संधारयन्ति। ऋतुपरिवर्तनानुसारं तेषां कृत्याकृत्योः परिवर्तनं सञ्जायते यथा वसन्ते पिकः रौति, शरदि हंसः विचरति, वर्षायां मयूरः नर्तनपरायणो दृश्यते। केचन पशुपक्षिणः ऋतुविशेष एव दृश्यमानाः भवन्ति अतः ऋतुविषयकज्ञानार्थं तेषामेव प्रमाणत्वं तदुक्तं यजुर्वेदे- ''वसन्ताय कपिंजलान्''।[1]

* **औषधिज्ञानम्**- सामान्यतः विविधपशुपक्षिकुलकलापेषु केचन नकुल-सर्प-मेषाजगो-सूकर-वैनतेयप्रभृतयः पशुपक्षिणः जन्मत एव विषनाशाकविविधौषधेः नैसर्गिकं ज्ञानं संधारयन्ति। अथर्ववेदस्य एकस्मिन् प्रसंगे इदं प्रतिपादितं यन्नकुलः सर्पं खण्डशः विच्छेद्य स्वात्मचिकित्सापद्धत्या सकलान् खण्डान् संयोज्य सर्पाय पुनः जीवनं ददाति। तदुक्तम्- ''नकुलो विच्छिद्य सन्दधात्यहिं पुनः''[2]

1. यजुर्वेदः 24.20
2. अथर्ववेदः 6.139-5

अयमेय विषयः ऋग्वेदस्य अपरस्मिन् महत्त्वपूर्णप्रसंगे एवमुपवर्णितमस्ति यत् शिखण्डिनि विषसंचूषणात्मिकैका अपूर्वा शक्तिः दृश्यते। मयूरः अहेः विषसूचषणं कृत्वा तं निर्विषं करोतीतिभावः।

* **महत्तीव्रगतिः**- गतेः वेगातिशयेन श्येनः पक्षीतरेभ्यो सर्वेभ्यो भिन्नः विद्यते, एषः मनोसदृशवेगेन-सञ्चाल्यमानः अत एव मनोजव इति नाम्ना एतस्य प्रसिद्धिः शास्त्रेषु तदुक्तं तैत्तरीयसंहितायाम्- **"श्येनमायिनं मनोजवसम्"**[1]

* **विवेकाधिक्यम्** - (नीरक्षीरविवेकः) निखिलपक्षिकुलेषु हंसः स्वकीयविशिष्टमेधया समग्रसंस्कृतवाङ्मये खगान्तरापेक्षया परमसम्मानेन स्मर्यते। एतस्य खलु तादात्म्यापन्नम् ऐक्यात्म्यकं नीरक्षीरं क्षीरनीरं वा नीरत्वेन नीरस्य क्षीरत्वेन क्षीरस्य च पार्थक्ये परमदक्षता प्रसिद्धा। तदुक्तं यजुर्वेदे- "अद्भ्यं क्षीरं व्यपिवत् क्रुङ्"[2]

भर्तृहरिणापि हंसविषये स्वकीयनीतिशतके एंव प्रत्यपादि-

> **अम्भोजनीवनविहार विलासमेन,**
> **हंसस्य हन्ति नितरां कुपितो विधाता।**
> **न त्वस्य दुग्धजलभेदविधौ प्रसिद्धां,**
> **वैदग्ध्यकीर्तिमपहर्तुमसौ समर्थः।।**[3]

उक्तवर्णितनीरक्षीरविवेकातिरिक्तमन्यदपि हंसस्य वैशिष्ट्यं शास्त्रेषु अभिहितं तच्चैवम्-

- विषनाशकौषधेः परिज्ञानम् (वयांसि हंसा या विदुः)[4]
- मैत्रीभावप्रधानता (हंसैरिवसखिभिर्वावखिः)[5]
- रात्रिजागरणं, रात्रिजन्यतमप्रभावाभावत्वम् "रात्रिजगदिव- अन्यद् हंसात्"[6]

**मधुरकटुवचनम्**

"नोलूकोप्यवलोकते यदि दिवा सूर्यस्य किं दूषणम्" अनेन भर्तृहरिप्रणीतनीतिशत-कीयश्लोकचतुर्थांशेन उलूकस्य दिवान्धत्वं प्रसिद्ध्यति। एतस्य ध्वनिरत्यन्तं कर्णकर्कशा, अशुभसंसूचिका चास्ति तदुक्तम्- ऋग्वेदे- 10/165/4, अथर्ववेद च-6/29।

---

1. तै. उप. 2.4.7.1
2. यजु. 19-73
3. नीतिशतकम्
4. अथर्ववेदः 8/7/24
5. अथर्ववेदः 20/91/3
6. अथर्ववेदः 6/12/01

**पुरुषवत्संभाषणम्**

पक्षिकुले समुत्पन्नस्य शुकस्य शारिकायाश्च वैशिष्ट्यमष्माभिः सर्वैरपि स्वजीवनेऽनुभूयते। अनयोः शुकशारिकयोः तादृशमेव वचनं तादृशा एव ध्वनिः संश्रूयते यादृशं मानवानाम्। आर्थात् यदा कश्चन पुरुषः शुकाय शारिकायै च रामः इति पुनः पुनः पाठयति तदा शुकशारिकान्निसृतं वचनं रकारोत्तरवर्त्याकरोत्तरवर्ति-मकारोत्तरवर्त्यकारः राम इति रूपमेव जायते, तदुक्तं यजुर्वेदे- " शारिः पुरुषवाक्, शुकः पुरुषवाक्"।[1]

पिकस्य वाणी सकलजनमनोहारिणी अत्यन्तमाह्लादकारिणी तुष्टिप्रदायिनी चास्तीति प्रसिद्धा वार्ता, एतद्वचने परममाधुर्य त्वस्त्येव सहैव 'कामाय पिकः' इति यजुर्वेदीयमंत्रेण कामोद्दीपकत्वमपि प्राबल्येन प्रतिपाद्यते।

**संस्कृतसाहित्ये उल्लिखितपशुपक्षिप्राणिनां संभाव्यपरिस्थितकी प्रकारः-**

जीवविज्ञानदृष्ट्या यजुर्वेदस्य चतुर्विंशतितमोऽध्यायः श्लाघ्यतमं स्थानं बिभर्ति, अध्यायेऽस्मिन् शतशः जीवानां समुल्लेखोऽवलोक्यते। अत्र प्रायशः शतद्वयाधिकषष्ठीपरिमिताः जीवाः प्रदर्शिताः, अत्रोल्लिखितसमेषां जीवानां विभागः निम्नवर्गेषु प्रतिपादयितुं शक्यन्ते-

(1) जलीयजन्तुवर्गः (AquaticAnimals)

(2) सरीसृपवर्गः (Reptiles)

(3) पक्षिवर्गः (Birds)

(4) स्तनधारिवर्गः (Mammals)

(5) वन्यपशुवर्गः (Wild Animals)

(6) कृमिकीटवर्गः (Insects)

प्रस्तुतस्यास्य शोधनिबन्धस्यायमभिप्रायो यत् आधुनिकपशु-पक्षिवैज्ञानिकैः प्राचीनतमां पशुपक्षि-सम्बन्धिनीमवधारणामवबोधनाय संस्कृतवाङ्मयस्यालोडनमवश्यं करणीयम्। अमरकोशादिग्रन्थेषु पशुपक्षिणां यानि नामानि सुप्रसिद्धानि तानि सर्वाणि गुणकर्मक्रियाजन्यानि नास्त्यत्र भ्रमावकाश इति संक्षेपः।

1. यजुर्वेदः 24-33

ISSN - 0974-8946
अप्रैल-जून, 2017

शोधप्रभा
वर्षः 42, द्वितीयाङ्कः

# बेनेदितो-क्रोचेप्रतिपादितस्याभिव्यञ्जनावादविमर्शः

डॉ. सुमनकुमारझा*

## Benedetto Croce – 1866-1952

पाश्चात्यसाहित्यिकसमीक्षकेषु बेनेदितोक्रोचेमहोदयोऽन्यतमोऽनुपमश्चेत्यत्र नास्ति संशीतिलेशः। तन्निरूपितोऽभिव्यञ्जनावादः पाश्चात्यकाव्यशास्त्रस्यैको महत्त्वपूर्णो विलक्षणश्च सिद्धान्तः। सिद्धान्तोऽयं न केवलं साहित्यसर्जनस्य कलासर्जनस्य वा प्रक्रियां प्रस्तौति, अपितु सौन्दर्यशास्त्रस्य सौन्दर्यदर्शनस्य च मीमांसामपि अभिनवरीत्या निर्धारयति। मूलतो दार्शनिकोऽयं कलासर्जनमपि दार्शनिकरीत्या अवलोकयति, अथ च तदाधारेणैव स्वकीयं सौन्दर्यशास्त्रीयं चिन्तनमपि प्रस्तौति। तन्मते काव्यसर्जनं कलाकृतिविरचनञ्च पूर्वं कवीनां कलाकर्तृणाञ्च अन्तर्मनसि जायते, अनन्तरं तस्यैवाभिव्यञ्जना कृतिरूपेण मूर्त्तिरूपेण चित्ररूपेण वा भवति।

क्रोचेमहोदयस्य जन्म इटलीदेशस्य नेपल्सनगरे 1866 ई. वर्षेऽभूत्। अनेन विरचितो ग्रन्थः 'ईस्थैटिका' (Aesthetica) सर्वप्रथमं 1910 ई. वर्षे इतावलीभाषायां प्रकाशितः। तदनन्तरं 1912 ई. वर्षे अस्य ग्रन्थस्यानुवादः प्रकाशितः। अनेन ग्रन्थेन पश्चिमजगति नवीनं कलाचिन्तनं सौन्दर्यचिन्तनञ्च प्रारब्धम्। साहित्यसर्जनस्य साहित्यसमीक्षायाश्च नूतना दृष्टिः प्रसृता। अस्य ग्रन्थस्य प्रसिद्धिवशात् क्रोचेमहोदयस्य गणना विश्वस्य प्रख्यातेषु सौन्दर्यशास्त्रिषु प्रारब्धा। क्रोचेमहोदय इटलीदेशस्य सर्वकारे शिक्षामन्त्रित्वेनापि कार्यमकार्षीत्। तदानीं नैकेषु विश्वविद्यालयेषु कलासंस्थानेषु च अभिव्यञ्जनावादमाश्रित्य व्याख्यानाय आहूतोऽयं दार्शनिकः साहित्यसमीक्षकश्च।

अनेन काव्यसर्जनस्य कलासर्जनस्य च नवीनं दर्शनं प्रतिपादितम्, यदभिव्यञ्जना-सिद्धान्तोऽभिव्यञ्जनावादो वा कथ्यते। 'ईस्थैटिका' (Theory of Aesthetic) नाम्ना रूपान्तरणमभूत्। यद्यपि ग्रन्थोऽयं सौन्दर्यशास्त्रस्य तथापि अत्र कला-काव्ययोः सर्जनस्य मूल्याङ्कनस्य समीक्षणस्य च नवीना दृष्टिः प्राप्यते। तेन सिद्धान्तोऽयं स्वपूर्ववर्तिनां सर्वेषां सौन्दर्यदर्शनानां काव्यशास्त्रसिद्धान्तानामध्ययनं कृत्वा प्रतिपादितः, किञ्च तत्र बौमगार्टन-काण्ट-हीगेल-प्रभृतिनां महतां विचारकानां विचारोऽपि समाविष्टः। तेन न तु कलासंबद्धाः वस्तुवादिनो विचाराः स्वीकृताः, न च शुद्धरूपवादिनो विचाराः एवाङ्गीकृताः। तद्विचारेण वस्तु रूपञ्च समवेत्य यदा एकत्वं प्राप्येते तदा कलाकृतेः सर्जनं जायते। कलाकृतेः काव्यकृतेर्वा उद्भवः सहजज्ञानाज्जायते (इन्ट्यूशनतः) (From Intitution), सहजज्ञानस्य सहजानुभूतेर्वाऽभिव्यञ्जनैव कला कविता वा। वादेऽस्मिन् तदानीं प्रभूताः प्रतिक्रियाः समागताः, नैकाः

* सहायकाचार्यः साहित्यविभागस्य, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्, नवदेहली-16

विप्रतिपत्तयः, आशङ्काः, प्रश्नाश्चोत्थापिताः, नैकाः भ्रान्तिमूलकस्थापना अपि समीक्षकैः कृताः स्थापिताश्च। तासां सर्वासां सर्वेषाञ्चोत्तरं समाधानञ्च क्रोचेमहोदयेन स्वकीयेषु-लिखितभाषणेषु सविस्तरं सतर्कं च प्रदत्तं, यत् 'एसेन्स ऑफ् ऐस्थेटिक' (Essence of Aesthetic) इत्यस्मिन् ग्रन्थे प्रकाशितं वर्तते। इत्थं 'एस्थेटिका' 'एसेन्स ऑफ एस्थेटिक' इत्यनयोः ग्रन्थयोरभिव्यञ्जनावादस्य समग्रं प्रतिपादनं प्राप्यते।

क्रोचेमहोदय एकः प्रतिभाशाली मौलिकचिन्तक आसीत्। अस्य कलाविषयकं साहित्यविषयकं च चिन्तनं विशुद्धसौन्दर्यदर्शनमेव प्रतीयते। अनेन सूक्ष्मरूपेण कवितायाः कलायाश्च रचनाप्रक्रिया निरूपिता, तन्मते काव्यकृतिः कलाकृतिर्वा वस्तुतोऽभिव्यञ्जना विद्यते। यदा अभिव्यञ्जना पूर्णा सफला च भवति तदा सा स्वयमेव कलारूपं धारयति। अभिव्यञ्जनायाः महत्त्वेनैव, तन्निरूपितः सिद्धान्तोऽभिव्यञ्जनावादनाम्ना (Expressionism) प्रसिद्धः सञ्जातः।

सौन्दर्यपरकं ज्ञानं तार्किकज्ञानाद् भिन्नं भवतीति क्रोचेमहोदयस्य विचारः। तज्ज्ञानं विज्ञानेतिहासनीतिशास्त्र-दर्शनशास्त्रेभ्योऽपि भिन्नमस्ति तर्कमूलकज्ञानाभावाद्। तत्तु सहजज्ञानं सहजानुभूतिर्वा (Intution), यस्य संबन्धः कल्पनया अनुभूत्या च विद्यते। अर्थात् सौन्दर्यपरकज्ञानस्य संबन्धोऽनुभूत्या कल्पनया च साकं वर्तते त्वन्येषां ज्ञानानां संबन्धो बुद्धया साकं भवति। कला भौतिकविज्ञानस्य परिधेर्बहिर्विद्यते। सहजानुभूतिरेव कला इति क्रोचेमहोदयस्य विचारः। आनन्दानुभूतिरेव कलाकृतेः काव्यकृतेश्च प्रधानं प्रयोजनम्। कलायाः संबन्धः केनापि वर्गेण जात्या क्षेत्रेण वा न, प्रत्युत काव्यं तु सार्वकालिकं सार्वदेशिकं सार्वभौमिकञ्च भवति, अथ च सर्वथा सर्वजनहिताय सर्वजनसुखाय च प्रवर्तते। कलासंबन्धे प्रश्नोऽयं क्रियते यत्किं कला वस्तुर्विद्यते रूपं वा? यद्यपि वस्तुरूपयोः भेदः कर्तुं शक्यते, परं तेषु प्रत्येकं कलावैशिष्ट्ययुतं नैव कर्तुं शक्यते[1]। यतो द्वयोः समन्वितिरेव कलाकृतिषु काव्यकृतिषु वा परिलक्ष्यते। बिम्बेन विना अनुभूतिः, अनुभूत्या विना बिम्बमपूर्णं निरर्थकं निष्प्रयोजनं शून्यं रसहीनं निःसत्त्वञ्च प्रतिभाति[2]।

वास्तविकं तथ्यमिदं वर्तते यदभिव्यञ्जना एव कला। सा सहजानुभूतिर्विद्यते प्रगीतात्मकत्वात्। बिम्बात्मकत्वात् सहज-ज्ञानं सहजानुभूतिर्वा अभिव्यक्तिरेव। बौद्धिकक्रियापक्षेया सहजमानसिकक्रियायां सहजानुभूतिरधिका भवति। इत्थं सहजानुभूतिरेवाभिव्यञ्जना। निष्कर्षतः कला अभिव्यञ्जना वा सहजानुभूतिरस्ति। विश्लेषणेन ज्ञायते यदभिव्यञ्जनावाद-कलावाद-बिम्बवाद-भाववाद-प्रतीकवादानां

---

1. क्रोचेः एस्थैटिका-एसेन्स ऑफ एस्थिटिक्स-पृ.-39
2. Croce : Essence of Aesthetic – page. 39
   "Content and from must clearly be distinguished in art, but must not be separately qualified as artistic that is, their unity, concrete and living which is that of synthesis and art is true aesthetic, synthesis a prior of feeling and image in intuition. It may be repeated that feeling without image is blind and image without feeling is void. feeling and image do not exist for the artistic spirit outside the synthesis"

मूले सहजानुभूतिरेव।[1]

सर्वे मानवाः कवयः सन्ति, केचन वरिष्ठाः केचन च कनिष्ठा इति क्रोचेमहोदयस्यैका विलक्षणा स्थापना वर्तते।[2] येषां सहजानुभूतिरभिव्यञ्जना वा पूर्णा, ते महान्तः कवयः, येषां चापूर्णाः सन्ति ते लघु-कवयः कथ्यन्ते। अभिव्यञ्जना कला काव्यं वा सौन्दर्यसृष्टिर्विद्यत इति तस्य विचारः। अस्याः सर्जनप्रक्रियायाः चतस्रोऽवस्थाः परिगण्यन्ते।[3] तत्र प्रथमावस्था कल्पनायाः प्रभावस्य, द्वितीया-मानसिक-सौन्दर्यात्मक-संश्लेषणस्य, तृतीया सौन्दर्यानुभूतेरानन्दस्य, चतुर्थी च तस्याः शारीरिकक्रियारूपेण रूपान्तरणंस्य, यथा ध्वनि-स्वर-गति-वर्ण-रेखादीनां रूपेण प्रकटीकरणस्य। एताः चतस्रोऽवस्थाः येषां कवीनां सहजानुभूत्या अभिव्यञ्जनया साकं वा निर्बाधरूपेण पूर्णाः सफलाः वा भवन्ति त एव महान्तः कवयः कलाकृतिप्रणेतारो वा कथ्यन्ते। अन्येषु कविषु कलाकर्तृषु वा एताः सर्वा अवस्थाः पूर्णतां न प्राप्नुवन्ति, परं द्वितीयावस्थापर्यन्तं तु प्रायशः सर्वे गच्छन्ति। तन्मते न केवलं प्रभावः, प्रत्युत प्रभावस्य रूप-रचनाऽपि अभिव्यञ्जनयैव जायते। एतद्रूपसर्जनपमेव कवेः कलाकृतिप्रणेतुर्वा कार्यं न तु सामान्यगुणविवेचनम्। इदमेव कविकर्मजन्यज्ञानस्य वा प्रथमं सोपानम्। अभिव्यञ्जना विचारं विनाऽपि जायते परं विचारोऽभिव्यञ्जनां विना न जीवतीति तद्विचारः। अस्माद् कारणादेव सभ्यताया आदौ कविता प्राप्यते, गद्यं त्वनन्तरमाविर्भूतम्। तन्मते मानवजातेः मातृभाषा कविता एव, आदिमानवाः निसर्गतः प्रकृत्या उदात्ताः कवय आसन्। यथा-

"The relation between intuitive knowledge or expression and intellectual knowledge or concept, between art and science, poetry and prose cannot be otherwise defined than by saying that it is of the double degree. The first degree expression and the second the concept; the first can exist without the second, but the second cannot exist without the first. There exists poetry without prose but not prose without poetry. Expression indeed is the first affirmative of human activity. Poetry is the maternal language of the human race, The first men were by nature sublime poets."[1]

" कविता मानवजातेः मातृभाषा विद्यते" इति क्रोचेमहोदयस्य स्थापना कियन्ती रमणीया मनोहारिणी च वर्तते। आदिमानवस्य भाषा लयात्मिका काव्यमयी चैवाऽऽसीत्। बालानामभिव्यक्तिरपि सर्वप्रथमं लयबद्धैव परिदृश्यते। अल्पेषु शब्देष्वेव स्वीयं भावमभिव्यनक्ति बालो यतः तस्याभिव्यञ्जना सहजज्ञानस्य विद्यते न तु बौद्धिकज्ञानस्य।

तद्विचारेण सौन्दर्यं सफलाऽभिव्यञ्जना, उत वा अभिव्यञ्जनामात्रमेव विद्यते। यतो यन्न सफला सा नैवाभिव्यञ्जना भवितुमर्हति। यथा- "Beauty is successful expression, or better

1. क्रोचेः थियरी ऑफ् ईस्थिटिक्स, पृ. 1
2. क्रोचेः थियरी ऑफ् ईस्थिटिक्स, पृ.- 24
3. क्रोचेः थियरी ऑफ् ईस्थिटिक्स, पृ.- 156

expression and nothing more, because expression when it is not successful, is not expression."

यस्यां काव्यकृतौ अभिव्यञ्जना अपूर्णा दृश्यते तत्रापि क्वचित्-क्वचित् गुणास्तिष्ठन्ति। तन्मते सुन्दराणां काव्यकृतीनां न भवन्ति कोट्यः कोट्यस्त्वसुन्दराणामेव निर्धारयन्ते। वस्तुतोऽभिव्यक्तौ कश्चिद् भेद-विभेदौ नाऽनुभूयते। यदि त्वभिव्यक्तिर्विद्यते चेत् सा सफलाभिव्यक्तिरेव, अन्यथा नास्त्यभिव्यक्तिः। तत्र तारम्यताऽपि नैव परिलक्ष्यते। नूनमेव विचारोऽयम् आदर्शवादं स्मारयति।

प्रकृतिसम्बन्धेऽपि क्रोचेमहोदयस्य विशिष्टो विचारः प्राप्यते। प्रकृतिः तेभ्यो रमणीया, ये तां कवित्वदृष्ट्या कलाकर्तृदृष्ट्या वा अवलोकयन्ति। कल्पनां विना प्रकृत्याः कोऽप्यंशो न प्रतीयते सुन्दरः। कविः प्रकृतिस्वरूपं स्वाभिनवदृष्ट्या कल्पनाशक्त्या वर्णनकौशलेन प्रातिभज्ञानेन च परिष्कृत्य प्रस्तौति। तदा तत्र स्वतः एव सौन्दर्यसत्ता समुत्पद्यते, तत्र कल्पना साहाय्यमाचरति। इति। प्रकृतिः प्रेरणाऽपि तेभ्यः प्रददाति ये प्रकृतिं सहजानुभूत्या कल्पनया वाऽवलोकयन्ति। प्रकृतिरपि कल्पनायाः साहाय्यं सम्पादयति बिम्बानां सृष्टौ, छवीनां सृष्टौ वा अत एव सा महत्त्वपूर्णा मन्यते कलासर्जने काव्यसर्जने वा।[2]

तन्मतेऽभिव्यञ्जनायामेव पूर्णं भवति कलाप्रयोजनम्। कविताः कलाश्चैकस्या एव कोट्याः वस्तूनि, सौन्दर्यञ्च व्यक्तिकल्पनायाः वस्तु वर्तते। अतः स्पष्टमिदं यत् कलाकारस्य कवेर्वाऽभिव्यञ्जना अन्तर्मनसो अन्तर्जगतः वस्तून्येव प्रकटयन्ति समुद्घाटयन्ति, न तु बाह्यजगतः। बाह्यजगतोः विषयवस्तूनि प्रथमं कवीनामन्तर्मानसे प्रविशन्ति, तत्पश्चाच्च तेषामभिव्यञ्जना जायते। सौन्दर्यसृष्टिरपि अन्तःकरणे एव भवति। अन्यैर्जनैरपि तदेव वस्तु सुन्दरं मन्यते यत्र तेषामन्तर्भावनाः अभिव्यनक्ति अभिव्यज्यन्ते वा, अभिव्यञ्जिताः स्युः। प्रत्येकं वस्तु कलायै उपयुक्तमिति कलादर्शनम्। तत्र सुन्दरमसुन्दरं वा इति प्रश्नो नैवोत्थाप्यते। बाह्यवस्तु यावद् कवीनामन्तर्मनसि न समायाति तावत् तद्वस्तु कलारूपं न धारयति। वस्तुतः कला अभिव्यञ्जना वा मानसिकी क्रिया विद्यते। अतः इयं सहजानुभूतिरूपा स्वीक्रियते। अनेन कलायाः अखण्डतां शाश्वतसत्तां च सिद्ध्यति, परं पूर्णाकलाकृतिः काव्यकृतिर्वा, नितरां दुर्लभा। इत्थं तेन अभिव्यञ्जनावादेन काव्यसर्जनाय कलादर्शनाय चैका विलक्षणाऽभिनवा च दृष्टिः प्रदत्ता, पद्धतिश्च निरूपिता। वस्तुतोऽभिव्यञ्जनवादो मूलतः कलाकृतेः काव्यकृतेर्वा रचनाप्रक्रियां प्रतिपादयति।

**अभिव्यञ्जनावादस्य आधारभूमिः**- कला सहजानुभूतिरेव, अस्याऽभिव्यञ्जना मनसि जायते। सूत्रमिदबलम्ब्यैव सिद्धान्तोऽयं प्रतिपादितः क्रोचेमहोदयेन। वस्तुतः कविभिः कलाकर्तृभिर्वा विशिष्टे काले चित्तस्यावधानकाले जायमाना सहजानुभूतिरेव कवितारूपेण कलाकृतिरूपेण वाऽभिव्यञ्जते, प्रकाश्यते वा। आत्मनो द्विधा क्रिया मन्यते तेन-(1) विचारात्मकक्रिया ज्ञानात्मक-क्रिया वा या

---

1. Theory of Aesthetics, page - 43
2. क्रोचे-थियरी ऑफ् ईस्थैटिक्स- पृ.- 10

सैद्धान्तिक-वर्गस्यान्तर्गतं परिगण्यते। (2) संकल्पात्मक-क्रिया व्यावहारिक-क्रिया वा या व्यावहारिकवर्गे परिगण्यते। द्विधा वर्गोऽयं पुनः द्विधा उपवर्गे विभज्यते। यथा-

सैद्धान्तिकवर्गे- (क) सहजानुभूतिजन्यज्ञानम् (ख) तर्काधारितं ज्ञानञ्च। एवमेव व्यावहारिकवर्गेऽपि - (क) उपयोगिनः आर्थिकक्रियाः (Useful Economic activities) (ख) नैतिक-क्रियाः- (Moral Activities).

अनेनक्रमेणापि तथ्यमिदं प्रदर्श्यते-




**सहजानुभूतं ज्ञानम् (Intutive Knowledge)**- ज्ञानमिदं स्वयं प्रकाश्यं कल्पनाजन्यं प्रातिभञ्चापि कथ्यते। ज्ञानस्यास्य संबन्धो व्यष्ट्या विशेषपदार्थेण व्यक्तिविशेषेण वा भवति, अपि च कला-साहित्ययोरुत्पादकं ज्ञानमिदम्। तर्केण प्राप्तस्य ज्ञानस्य संबन्धो बुद्ध्या पदार्थबोधेन च भवति। ज्ञानमिदं समष्टेः सामान्यस्य वा ज्ञानम्, यस्मात् दर्शनं विज्ञानञ्चोत्पद्येते। बौद्धिकज्ञानात् स्वतन्त्रं भवति स्वयंप्रकाश्यज्ञानम्। अत्र कस्यापि मार्गदर्शनं नापेक्ष्यते। ज्ञानेऽस्मिन् एवंविधा अलौकिकी शक्तिर्भवति, या क्षणमात्रेण कमपि हृदयं भावनां विषयवस्तुं वा परिगृह्य मूर्तरूपेण साकारेण सुन्दररूपेण चाभिव्यनक्ति। तर्कज्ञानाय यदि बुद्धिरपेक्षिता, तु सहजज्ञानाय कल्पनाशक्तिः। कल्पनया सहजज्ञानं प्राप्यते, सहजज्ञानञ्च बिम्बानि रचयति। तर्कज्ञानेन पदार्थबोधो जायते। प्रातिभज्ञानकाले तर्कज्ञानस्योपस्थितिः नानिवार्या। उदाहरणाय कस्मिंश्चिच्चित्रे चन्द्रज्योत्सनामवलोक्य अस्माभिः कल्पनात्मिकानुभूतिरेव क्रियते, न तु विचारः। कस्मिंश्चिन्नाटके कश्चित् पात्रं यदि गंभीरं चिन्तनं कथनं करोति, तदा दार्शनिकविचारोऽपि काव्यात्मकगुणैरनुरञ्जितो भवति। अर्थात् विचारोऽपि अनुभूतिविषयो सञ्जायते, बौद्धिकं तत्त्वमपि तद्रूपं गृह्णाति।

सारतः क्रोचेमहोदयस्य विचारेण ज्ञानस्य द्विधा रूपं वर्तते- एकं सहजज्ञानं, प्रज्ञा, प्रतिभा वा। द्वितीयञ्च बौद्धिकं तर्कलब्धं ज्ञानं प्रमा वा। प्रथमं कल्पनाशक्त्या प्राप्यते, द्वितीयञ्च तर्केण विचारेण वा। सहजज्ञानं तावदेव स्वीक्रियते यावदभिव्यञ्जते, न ततो न्यूनं न चाधिकम्। तज्ज्ञानं मनसि जायमानं प्रभावं कल्पनाजन्य- बिम्बरूपेणाभिव्यज्यते। इयमभिव्यञ्जनैव कलाकृतिरूपेण काव्यकृतिरूपेण वा प्रकाश्यते। अतः सहजानुभूतिरेव (Intuition) कला विद्यते। इत्थमभिव्यञ्जनासिद्धान्तः कलावाद-बिम्बवाद-प्रभाववादप्रभृतीनां प्रेरकोऽस्ति।

**'सौन्दर्यशास्त्रस्य सिद्धान्तः'** इत्यस्मिन् ग्रन्थे तेन तत्त्वं (Matter) विषयवस्तु वा, रूपञ्च (form) इत्युभयोरेव विचारः कृतः। तस्य स्थापना वर्तते- यत् सौन्दर्य-सत्तायां रूपमेव महत्त्वपूर्ण भवति न तु तत्त्वम्। तन्मते वास्तविक- तत्त्वज्ञानापेक्षया सहजज्ञानं भिन्नमेव वस्तु विद्यते। कला ज्ञानं रूपञ्चोभावपि वर्तते, अतः सा दृश्यमानेभ्यः तत्त्वेभ्यो मानसिक-तत्त्वेभ्यश्चापि भिन्ना। सन्दर्भेऽस्मिन् तत्कथनमित्थं प्राप्यते-

"Since art is knowledge and form, it does not belong to the world of feeling and of psychic material. The reason why so many Aestheticians have so often insisted that ant is appearance is precisely, because they felt the necessity of distinguishing it from the more complex fact of perception by maintaining its pure intuitivity for the same reason, it has been claimed that art is sentiment. Infact, If the concept or content of art and historical reality as such be excluded there remains no other content than reality apprehended in all its ingeniousness and immediateness in vital effort is sentiment, That is to say pure intuition."[1]

अनेन कथनेन क्रोचेमहोदयस्य मतं स्पष्टं भवति यत्- भावात्मकं ज्ञानमेव सहजज्ञानमस्ति, कला कविता च भावाभिव्यक्तिरेव। भावो नानुभूतिमात्रं, प्रत्युत अनुभूत्याः कल्पनागतं स्मृतं वा रूपम्। इयं स्थितिरपि अभिव्यञ्जनायाः पूर्णतायां सफलाभिव्यञ्जनाप्रक्रियायां वा द्रष्टुं शक्यते, परिलक्ष्यते वा। तन्मते अभिव्यञ्जना सर्वदा सर्वथा चाखण्डात्मिका पूर्णा वा भवति न च तस्या विविधेषु वर्गेषु विभाजनं कर्तुं शक्यते। अत एव प्रभावो नाऽपितु प्रभावेन समुत्पन्ना रूप-रचना एव कलाकृतिः काव्यकृतिर्वा कथ्यते।[2]

इयमेवाभिव्यञ्जना वर्तते। व्यक्तेः वस्तुनोऽनुभूत्याः वा रूपसर्जनमेव कलाकर्तुः कवेर्वा कार्यम्, न तु सामान्यगुणविवेचनम्। तद्विचारेण सहजज्ञानमभिव्यञ्जना वा ज्ञानस्य प्रथमं सोपानम्,

---

1. Croce: Theory of Aesthetic- page 29-30.
2. तत्रैव पृ. सं.30

बुद्धिजन्यज्ञानं तदनन्तरं द्वितीयं सोपानम् प्रथमं द्वितीयं विना स्थातुं शक्यते, परं द्वितीयं प्रथमं विना नैव। सन्दर्भेऽस्मिन् क्रोचेमहोदयस्य कथनं द्रष्टव्यम्।[1]

कला का? इत्यत्र तेनोच्यते यदन्तर्दृष्टिः सहजज्ञानं वा कला विद्यते। कलाकारः कविर्वा बिम्बं सर्जयति सौन्दर्यदर्शनमपि निरूपयति। कलाया आनन्दानुभूतिं सौन्दर्यानुभूतिं वा वयं तदा प्राप्नुमः यदा कविवर्णितं बिम्बं स्वान्तर्मनसि पुनः सर्जयामः। क्रोचेमहोदयमते भौतिक-तथ्येषु न दृश्यते वास्तविकता। चरमं सत्यं वास्तविकता वा तु कलासु एव परिलक्ष्यते। अत एव कलासाधनायै जनाः सम्पूर्ण जीवनमपर्यन्ति। अतः कला सहजज्ञानं वर्तते। कलासु वैशिष्ट्यं गुणवत्ता च प्रतिभया आदर्शरूपेण च समागच्छति। कल्पनाशक्तिः सहजज्ञानं विचारात्, कलां विज्ञानाद् दर्शनादेतिहासाच्च पृथकं करोति। यदा तत्र विचार-निर्णयादयो विकसन्ति, तदा कलासु कलातत्त्वस्याभावो प्रारभ्यते कला म्लायते च। कलाकारः कविर्वा यदा आलोचकः सञ्जायते, कलामर्मज्ञोः रसिको वा यदा विचारकः सञ्जायते तदा तेभ्यो कला मूर्च्छितायते।[2] कलाकृतयः काव्यकृतयो वा महतां कवीनां वासनाबलात् प्रतिभावशाद् वा समुत्पद्यन्ते। वास्तविकसर्वोत्तमासु कलाकृतिषु यद्विशिष्टं वृत्तं दृश्यते तदस्ति परिपूर्णं कल्पितञ्च रूपम्। इदमेव तत्त्वं कलाकृतेः जीवातुः समत्वरूपं परिपूर्णत्वञ्च कथ्यते।[3] यथा- "Art is perfectly defined when simply defined as intuition."[4]

वस्तुतः सहजानुभूतिः केवलमभिव्यक्तिरूपेणैव ज्ञायते। विचारोऽपि यावत् शब्दैर्नाभिव्यज्यते तावत्तन्न ज्ञायते। सङ्गीतस्य बिम्बं तदैव निर्मीयते यदा तद् ध्वन्यते, चित्रबिम्बमपि तदैव निर्मीयते यदा तद्वर्णेषु चित्रयति।[5]

अभिव्यञ्जनां विना उपर्युक्तानां सत्त्वमेव न दृश्यते। एवमेव कविता लयबद्धेषु छन्दोबद्धेषु च शब्देषु एव उत्पद्यते। "Poetry is born as those words that rhythm and metre."[6]

क्रोचेमहोदयस्य सम्पूर्णोऽयं सिद्धान्तः सहजानुभूतावेवावलम्बितः। तन्मते सहजानुभूतिरेव कला, यस्याभिव्यञ्जना मनसि एव जायते। बौद्धिकज्ञानाद् पूर्णतः स्वतन्त्रा विद्यते सहजानुभूतिः। सहजानुभूतौ

---

1. Croce: Theory of Aesthetic- page -43
   "The relation between intuitive knowledge or expression and intellectual knowledge or concept, between art and science, poetry and prose cannot be other-wise defined than by saying that it is one of the double degree. ................................................................ expression, Indeed is the first affirmative by human activity. Poetry is the maternal language of the human race, The first men were by nature sublime poets."
2. क्रोचेः एस्थैटिका-एसेन्स ऑफ् एस्थिटिक्स-पृ. 44
3. Croce: The Essence of Aesthetic, page 17-18
4. Croce: The Essence of Aesthetic, page 32-33
5. Croce: The Essence of Aesthetic, page 42-43
5. Croce: The Essence of Aesthetic, page 44

अलौकिकी शक्तिर्भवति। सा कस्मैश्चित् हृदयाय, भावनायै वा सुन्दरं रूपं प्रददाति, तस्यै आकारं मूर्तरूपं च प्रयच्छति। सहजानुभूतिसंस्पर्शेन बौद्धिकं तत्त्वमपि तदनुरूपं परिवर्तयति। विचारोऽपि अनुभूतिविषयो भवति। सहजानुभूतिजन्यप्रभावस्य बुद्धि-परम्परा-तर्क-क्रिया-स्वाभाविकताप्रभृतिभ्यो न कोऽपि संबन्धः। अत्र तु प्रभावानामभिव्यञ्जना प्रवर्तते, तस्याभिव्यक्तेः क्रिया वा इति।

**सहजानुभूतिः-** सहजानुभूतिः का? किञ्च पार्थक्यमस्याः बौद्धिकज्ञानाद्? अत्र चोच्यते- प्रकृत्या मानवाय चिन्तनेन विचारविमर्शेण तर्केण च कस्या अपि क्रियायाः घटनायाः वा विवेचनक्षमता प्रदत्ता। बौद्धिकं ज्ञानमिदं युगेभ्यो मानवेन सम्प्राप्तं प्राप्यते च संगृह्यते च। अनेन ज्ञानराशिना मानवस्य सैद्धान्तिकज्ञान- विज्ञान-तर्क-अर्थिकोपक्रम-नैतिकक्रियाव्यवहाराणाञ्च विपुलं भाण्डारं निर्मितम्। एतत्सर्वं मानवस्य बौद्धिकं ज्ञानम्। परं प्रकृत्या मानवाय आदिकालादेव आदिमावस्थात एवैका अन्यापि क्षमता, अन्यमपि सामर्थ्यं वा प्रदत्तम्, यत् सहजानुभूतिः सहजप्रतिभां संबुद्धिर्वा आंग्लभाषायां 'इन्ट्यूशन' च कथ्यते। यद्यपि तर्काधारितज्ञानवशाद् मानवस्य संबुद्धिः न्यूनायते, तथापि मानवीय-भावनानां सूक्ष्मस्तरेषु अनिर्वचनीयस्तरेषु अस्याः महत्त्वमक्षुण्णमस्ति। साहित्य-सङ्गीत-कला-सौन्दर्यचेतनानाञ्चानुभूतिरनया सहजानुभूत्यैव क्रियते, भूयते च। इमां बुद्धेः क्रियां विनैव मनसि स्वतो जायमानस्य मूर्त्तिकरणस्य क्रिया कथयितुं शक्यते। वस्तुतः आत्मनः निजी क्रिया इयम्। अतो बुद्धि-ऐन्द्रियसंवेदना-वस्तुगतप्रत्यक्षीकरणेभ्यो भिन्ना भवति सहजानुभूतिः। कदाचिदनायासेन मनसि काचिद् झङ्कृतिः समुत्पद्यते, कश्चिदरूपाचिन्त्य झङ्कारो भवति, अथ च वस्तुनो रूपापेक्षया, तस्य आत्मा मनसि अभिव्यज्यते। अनया रीत्या वस्तुनो रूपस्य बिम्बस्य वा आन्तरिकी चेतना अभिव्यज्यते, इयमभिव्यञ्जनैव कलाकृतिः काव्यकृतिर्वा वर्तते।

**कला सहजानुभूतिश्च-** कला सहजानुभूतिश्चाभिन्ने स्तः। कलाया अर्थ एव सहजानुभूतिरिति क्रोचेमहोदयस्य संकल्पना। इयं मनसि जायमानानामचिन्त्यप्रभावाणामभिव्यञ्जना एव। इयमेका आन्तरिकी क्रिया वर्तते, तस्याः क्रियायाः बाह्यं प्रत्यक्षं वा स्वरूपं कला कथ्यते। सर्वेषु मानवेषु किञ्चिदपि सम्बुद्धितत्त्वं भवत्येव। अनेन तत्त्वेन मानवेषु कल्पना जागर्ति, सक्रिया च भवति। अनेनैव अस्माभिः साहित्य-सङ्गीत-कलानाञ्च रसानुभूतिः प्राप्यते। अनेन हेतुना कविभिः प्रयुक्तानां शब्दानामथवा कलासु प्रयुक्तानां वर्ण-रेखा-चित्रानां च वस्तुगतार्थो नापितु कल्पनाजन्यप्रतीयमानार्थं एवाभीष्टः सहृदयसामाजिकाय, तदेवार्थोऽस्मान् रञ्जयति आह्लादयति च। सम्बुद्धिसत्यपि प्रतिजनं सहजानुभूतिर्भिद्यते। अनया दृष्ट्या कवयः कलाप्रणेतारश्च सौभाग्यशालिनो, यतः तेषु कानिचिद्वैशिष्ट्यानि भवन्ति संलक्ष्यन्ते च, यस्मात् कारणात् ते जनसामान्येभ्यः पृथक्रूपेण पदार्थानवलोकयन्ति वर्णयन्ति च। कविषु कलाकर्तृषु चाधोलिखिताः गुणाः भवेयुः। यथा- प्रथमः- प्रबोधनी इच्छाशक्तिः। द्वितीयः- कलासाधनस्य ज्ञानम्। तृतीयः- चिन्तनक्षमता, तर्कात्मिकाबुद्धिः। चतुर्थः- ऊर्वरा कल्पनाशक्तिः, बिम्बविधानस्य सामर्थ्यञ्चेति। एतेषु प्रथमान्तिमयोः कलाभिव्यञ्जनादृष्ट्या विशिष्टं महत्त्वं वर्तते। द्वितीय-तृतीयौ त्वानुषङ्गिकतत्त्वानां भूमिकां निर्वहतः।

**अभिव्यञ्जना कल्पना च-** कलाकर्तुः कविर्वा सर्वोत्तमः सर्वाधिको महत्त्वपूर्णश्च गुणः कल्पनाशक्तिरेव। तेन कल्पनाशक्त्यैव सौन्दर्यबोधः क्रियते। सौन्दर्यबोधस्यास्य मूर्तिविधाने कल्पना एव सहायिका भवति। अत एव कल्पना सौन्दर्यञ्चान्योन्याश्रितं मन्येते। वस्तुन आन्तरिकं स्वरूपं कल्पनयैवाभिव्यनक्ति। वस्तुनः परिगणना-तत्त्वविवेचन-वर्गीकरण-लक्षणनिर्धारण-प्रभृतिषु तर्काश्रितकार्येषु न प्रवर्तते कल्पना, इदं तु ज्ञानाश्रितायाः बुद्धेः कार्यक्षेत्रम्। कल्पना तु आत्मिकप्रभावानामरूपसंवेदनायाश्च सौन्दर्यपूर्णं मूर्त्तिविधानं सम्पादयति, अत इयं स्वयं सहजानुभूतिरूपा कलारूपा च वर्तते। अत एव कल्पनायाः संस्पर्शं विना न भवति पूर्णा सफला च अभिव्यञ्जना। कल्पनाशक्त्यैव कविः काव्यरचनायां प्रवृत्तो भवति। अतः कल्पनां कवेः मौलिकधर्मोऽपि कथयितुं शक्यते। काव्येषु यः कोऽपि भावोऽभिव्यञ्जयते कविना, तत्तु कल्पनाया अभिव्यक्तिरेवास्ति। इत्थं काव्येषु कलासु च कल्पना नितरां महत्त्वपूर्णा इति क्रोचेमहोदयस्य विचारः। 'एस्थिटिक' इति ग्रन्थेऽभिव्यञ्जनां बाह्यतत्त्वरूपेण कल्पनां चाभ्यन्तरतत्त्वरूपेण स्वीक्रियते तेन।[1]

**अभिव्यञ्जनाप्रक्रिया-** यदभिव्यज्यते, योऽभिव्यनक्ति येन साधनेनाभिव्यञ्जते सा अभिव्यञ्जना इति अभिव्यञ्जनास्वरूपम्। अभिव्यञ्जनायाः क्रिया सहजानुभूत्या कवीनां प्रेरणायाः क्षणेषु एव सम्पद्यते। तदानीमेव काव्यकृतेरन्तर्दर्शनमन्तर्मनसि क्रियते कविभिः। तन्मते कलासर्जनप्रक्रियायां सर्वप्रथमं कविषु रूपहीना निराकारा च संवेदना प्रबुध्यते, जागृयते वा, या तेषां सम्बुद्धया प्रेरणा प्राप्यते। अनन्तरमस्याः संवेदनाया आन्तरिकान्वितिर्भवति, यस्मात् कारणात् कविभिः कलाकर्तृभिश्चैको विशेषोऽनिर्वचनीयोऽहेतुकश्चानन्दोऽनुभूयते। इदमेवाभिव्यञ्जनायाः साफल्यम्। तदनन्तरं तदेवानुभूतिरेव कविभिः कलाकर्तृभिश्च वर्ण-रेखा-स्वर-शब्दप्रभृतिभिः साधनैः लोकाय सम्प्रेष्यते, यत्तेषां सामाजिक-दायित्त्व-निर्वहणमेव। बाह्यरूपविधानमिदं मूर्त्तिकरणं वा शिल्पं कथ्यते। बाह्यरूपप्रकाशनमिदं स्मृतिसहायकमात्रं मन्यते तेन। येन कवीनां कलाकर्तृणाञ्चानुभूतिः पाठकेषु दर्शकेष्वपि च जागृयात्। अथ च बहुकालं यावत् तस्याः संरक्षणं भवेत् येन लोकस्य मार्गदर्शनं सम्भवेत्। रूपविधानमिदं केषुचिन्नियमेषु नीतिषु पद्धतिषु शैलीविशेषे वा न भवत्याश्रितम्। वस्तुतः शैली आन्तरिकानुभूतिश्चाभिन्ने वर्तते। विषयवस्तु स्वयं स्वानुकूलां शैलीं चिनुते। वस्तुतः आन्तरिकानुभूतेः सफलतापूर्वकमभिव्यक्तिरेव अभिव्यञ्जनायाः साफल्यम्। अत एव असफलताभिव्यञ्जनानाम्नो न भवति कश्चिद् पदार्थः। एवमेव कविभ्यः तदेव पदार्थः सुन्दरो यस्तत्र बिम्बविधानाय समर्थः स्यात्, आन्तरिकीं संवेदनां च जागृयात्। ततः उद्भूताऽभिव्यञ्जना एव रमणीया। कलाकर्तुः कवेर्वा मनसि अकारणत्वेन अचिन्त्यरूपेण संवेद्यमाना सहजानुभूतिजन्याभिव्यञ्जनैव कला कथ्यते। अत एव सहजानुभूतिरभिव्यञ्जना च एकैव या सौन्दर्यतत्त्वं जनयति[2]। कलारचयितृ कविर्वा स्वयमेव सौन्दर्यस्यास्य सौन्दर्यजन्यानन्दस्य च

---

1. The work of art (The aesthetic work) is always internal; and that which is called external is no longer a work of ant- Croce: Aesthatica- page-51
2. "It is impossible to distinguish intuition from expression in this cognitive process. The one appears with the other at the same instant, because they are not two but one."- Croce: essence of Aesthatics- page-44

भोक्ताऽपि समीक्षकश्चापि। इत्थं कला कलासर्जनं रसास्वादनं समीक्षणञ्च सर्वे एकत्रैव समवेताः भवन्ति।

**निष्कर्षः**- निष्कर्षरूपेण वक्तुं शक्यते यदभिव्यञ्जनावादः साहित्यसमीक्षायाः कलासमीक्षायाः वा निकषं न प्रस्तौति प्रत्युत कलायाः काव्यकृतेर्वा सर्जनस्य सर्जनप्रक्रियायाश्च स्वरूपमुद्घाटयति, विश्लेषणञ्च प्रस्तौति। सिद्धान्तेऽस्मिन् वस्तुनः सौन्दर्यमुपेक्ष्य केवलमभिव्यक्तिसौन्दर्यमेव परीक्ष्यते। अभिव्यञ्जनावादी समालोचको वस्तुनः सौन्दर्यपूर्णाभिव्यक्तावेव कलाकर्त्तुः कवेर्वा साफल्यं निर्धारयति सौन्दर्यतत्त्वञ्च विवेचयति। कैश्चित् समीक्षकैरभिव्यञ्जनावादस्य कुन्तकाचार्यस्य वक्रोक्तिसिद्धान्तेन सह तुलनाऽपि कृता, परं द्वौ नितान्तं भिन्नभूमयोरवस्थितौ स्तः। कुन्तकेन यत्र विरचितानां कवीतानां मूल्याङ्कन-निकषं पद्धतिर्वा प्रस्तूयते, वक्रोक्तेः विविधरूपाणां चर्चाऽपि क्रियते तत्रैव क्रोचेमहोदयेन साहित्यसर्जनप्रक्रियायाः मौलिकं विश्लेषणं क्रियते। काव्यरचना कलारचना वा कथं सञ्जायते, तस्याः किं स्वरूपम् एतस्योत्तरमेव सिद्धान्तस्यास्य प्रमुखः प्रतिपाद्यो विषयः।

## सहायकग्रन्थसूची-

1. Western litrary Criticism- From plato to present by A Habib.
2. The use of poetry and the use of criticism—By T.S. Eliot, Faber and Faber—3 Queen square, London.
3. Coleridge and Abhinavgupta – Dr Shrikrishna mishra.
4. पाश्चात्त्यकाव्यशास्त्र के सिद्धान्त डॉ.शान्तिस्वरूपगुप्त, प्रकाशकः, अशोकप्रकाशन, दिल्ली-6।
5. पाश्चात्त्यकाव्यशास्त्र के सिद्धान्त-डॉ. मैथिलीप्रसादभारद्वाज, हरियाणा साहित्य अकादमी चण्डीगढ।
6. भारतीय एवं पाश्चात्त्यकाव्यशास्त्र- डॉ.बच्चन सिंह, हरियाणा साहित्य अकादमी, चण्डीगढ।
7. पाश्चात्त्यकाव्यशास्त्र की परम्परा - डॉ. नगेन्द्र ।
8. पाश्चात्त्यकाव्यशास्त्र- डॉ. भगीरथ मिश्र ।
9. पाश्चात्त्यकाव्यशास्त्र -प्रो. देवेन्द्रनाथ शर्मा ।
10. पाश्चात्त्यकाव्यशास्त्र- डॉ. कृष्णदेव शर्मा, विनोदपुस्तकमन्दिर, आगरा ।
11. क्रोचेः एस्थैटिका-एसेन्स ऑफ एस्थिटिक्स।

ISSN - 0974-8946
अप्रैल-जून, 2017

शोधप्रभा
वर्षः 42, द्वितीयाङ्कः

# दर्शनान्तरीयमतपर्यालोचनपुरस्सरं शाब्दिकदिशा शाब्दबोधविचारः

**डॉ. रामनारायणद्विवेदी***

सर्वमपीदं जागतिकं व्यवहारजातं शब्दाधीनमतः जगति शब्दानामनितरसाधारणं वैशिष्ट्यं वरीवर्ति। सर्वमपि ज्ञानं शब्दानुविद्धं भवतीति वाक्यपदीये श्रीभर्तृहरिः प्रत्यपीपदत्। तथा चोक्तम् -

**न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते।।[1] इति।**

अतः शाब्दबोधविचारप्रसङ्गे तद्घटकतया प्रविष्टस्य शब्दस्य तद्वृत्तेश्च ज्ञानं नितान्तमपेक्षितं भवति। तत्र कस्य पदस्य कुत्र शक्तिरिति निर्णयायोच्यते -

**शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च।**
**वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः।।[2]**

अत्र च सत्स्वपि कारणान्तरेषु व्यवहारस्य विशिष्टं कारणत्वमङ्गीक्रियते बुधैः। अत एव शक्तिग्राहकशिरोमणिः व्यवहार एवेति नागेशः प्रतिपादयति। यदा प्रयोजकवृद्धप्रयुक्तं गामानय, गां बधान इत्यादिवाक्यं श्रृणोति व्युत्पित्सुर्बालः तदा आवापोद्वापाभ्यां गवादिशब्दानामर्थनिधारणं कुरुते। एवं व्याकरणोपमानादिभिरपि शक्तिग्रहः शास्त्रेषु प्रपञ्चितः। इत्थं प्रत्येकं पदस्य शक्तिग्रहं विधाय वाक्यघटकपदानामन्वयं विज्ञाय च शाब्दबोधः सम्पद्यते।

तत्र शाब्दबोधविचारप्रसङ्गे प्रमुखतः नैयायिकमीमांसकयोः मतं पर्यालोच्य शाब्दिकाभिमतं सिद्धान्तं निभालयामः। तत्र नैयायिकाः प्रथमान्तार्थमुख्यविशेष्यकबोधमङ्गीकुर्वन्ति, मतेऽस्मिन् फलव्यापारौ धात्वर्थः कृतिराख्यातार्थः, अत्र फलस्य व्यापारे व्यापारस्य च आख्यातार्थकृतौ अनुकूलत्वसम्बन्धेनान्वयः, कृतेश्च समवायसम्बन्धेन प्रथमान्तार्थेऽन्वयः तथा च रामस्तण्डुलान् पचति इत्यतः तण्डुलनिष्ठविक्लित्यनुकूलव्यापारानुकूलकृतिमान् राम इति शाब्दबोधः सञ्जायते।

मतेऽस्मिन् [3]आख्यातार्थसंख्यायाः प्रथमान्तार्थेऽन्वयात् आख्यातार्थसंख्याप्रकारकबोधे प्रथमान्तपदजन्योपस्थितिर्हेतुरिति कार्यकारणभावो वक्तव्यः तथा सति "चन्द्र इव मुखं दृश्यते" इत्यादौ अन्वयव्यभिचारादिदोषं वारयितुमितराविशेषणत्वघटितमिति पदं देयं तथा सति महद्गौरवमापद्यते। अन्यच्च प्रथमान्तविशेष्यकबोधाङ्गीकारे "पश्य मृगो धावति" इत्यत्र भाष्यसम्मता एकवाक्यता न सम्भवति। तथा हि न्यायमते धावनानुकूलकृतिमान् मृगः, दर्शनाश्रयस्त्वमित्येव बोधः, अत्र च धावनस्य कृतौ विशेषणत्वं स्पष्टमेव। अतस्तस्य दर्शनविशेषणता न सम्भवति। एकत्र विशेषणत्वेनान्वितस्यापरत्र विशेषणत्वायोगात्। अतः एकवाक्यत्वं कथञ्चित् न सम्भवति। एवञ्च वाक्यस्यास्य धावनानुकूलकृतिमान्

---

* सहाचार्यो व्याकरणविभागे, बनारसहिन्दूविश्वविद्यालयः, वाराणसी, उ.प्र.

1. वा.प.ब्र.123   2. न्या.सि.मु.शब्दखण्डः   3. वै.भू.सा.धात्वर्थप्रकरणम्

यो मृगः तत्कर्मकं प्रेरणाविषयीभूतं त्वत्कर्तृकं दर्शनमिति बोधो जायते, तथा सति दृशिक्रियानिरूपित-फलाश्रयत्वात् धावनानुकूलकृतिमतो मृगस्य कर्मतापत्तिः, प्रथमानुपपत्तिश्च जायते नैयायिकानां मते।

वैयाकरणनये तु व्यापारमुख्यविशेष्यकबोधाङ्गीकारात् पश्य मृगो धावतीत्यत्र धावनस्यैव कर्मत्वं तत्र च प्रातिपदिकत्वरूपयोग्यताया अभावात् न द्वितीया। धावनस्य च कर्मतानिरूपकत्वसम्बन्धेन दर्शनेऽन्वयः। न च त्वमिति पदाध्याहारेण वाक्यस्वरूपं कल्प्यं तथा सत्यपि वाक्यभेदप्रसङ्गस्य तदवस्थात्, अतः नैयायिकाभिमतः प्रथमान्तार्थमुख्यविशेष्यको बोधो न युक्तियुक्तः।

मीमांसकमते च फलस्य धात्वर्थत्वं व्यापारस्य च प्रत्ययार्थत्वम्, व्यापारश्च भावनेति पदेन व्यवह्रियते। एवञ्च भावनायाः प्रत्ययार्थत्वे "प्रत्ययार्थस्य प्राधान्यम्" इति नियमोऽपि स्वरसतः संगच्छते इति तेषामाशयः। परन्तु तदपि नैव युक्तिसहम् - "लः कर्मणि" इत्यादिसूत्रविरोधापत्तेः। न हि तेन व्यापारस्य प्रत्ययार्थता लभ्यते। अत एव मीमांसकमतं दूषयन् भट्टनागेशः परमलघुमञ्जूषायाम् - "गुरुः शिष्याभ्यां पाचयति इत्यादौ हेतुमति च इति सूत्रबलात् प्रयोजकव्यापारस्य णिजर्थत्वे स्थिते प्रयोज्यव्यापार आख्यातार्थो वाच्यः। एवञ्च संख्यायाः स्ववाचकाख्यातार्थव्यापारेऽन्वयिन्येवाऽन्वयाच्छिष्या-भ्यामिति द्विवचनानापत्तिः। पाचयतीत्येकवचनानापत्तिश्च गुरोरभिधानेन तत्र प्रथमाया अनापत्तेश्च शिष्यशब्दात्तदापत्तिश्च"[1]। अतः भाष्यविरुद्धं मतमिदमालोच्य वैयाकरणः धात्वर्थव्यापारमुख्य-विशेष्यकशाब्दबोधमङ्गीकुर्वते। तत्र धातोः कुत्र शक्तिरिति जिज्ञासायामुच्यते -

**फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः।**
**फले प्रधानं व्यापारः तिङर्थस्तु विशेषणम्।।[2]**

अर्थात् फलव्यापारौ धात्वर्थौ, फलाश्रये व्यापाराश्रये च तिङां शक्तिः। तत्र फलस्य व्यापारस्य च धातोर्लभ्यत्वात् "अनन्यलभ्यो हि शब्दार्थः" इति भाष्यवचनप्रामाण्यात् आश्रयमात्रं तिङर्थः। अत्र फलव्यापारयोरित्यत्र वाचकत्वं सप्तम्यर्थः, एवञ्चात्र द्विवचनोपादानेन फलव्यापारयोः पृथक् शक्तिः स्वीक्रियते। तथा सति फलनिरूपितवाचकतावान् धातुः, व्यापारनिरूपितवाचकतावान् च धातुरित्ययमर्थः सम्पद्यते। एवञ्च एकवृन्तगतफलद्वयन्यायेन पृथक्शक्तिस्वीकारोऽङ्गीकृतः। पृथक्शक्तिस्वीकारादेव च स्तोकादिरूपकर्मणः धात्वर्थफलेन सह अभेदान्वयः सिद्ध्यति। विशिष्टशक्तिस्वीकारे तु फलस्य एकदेशत्वात् तत्र स्तोकादिरूपकर्मणोऽन्वयो न स्यात् "पदार्थः पदार्थेनान्वेति न तु तदेकदेशेन" इति न्यायस्य जागरुकत्वात्। एतन्न्यायास्वीकारे तु नित्यो घट इत्यापद्येत, अतः पृथक्शक्तिरिति प्राचां मतम्।

भट्टनागेशास्तु फलव्यापारयोः पृथक् शक्तिस्वीकारे उद्देश्यविधेयभावेनान्वयापत्तिः तयोः स्यात्, उद्देश्यविधेयभावेनान्वयप्रयोजिकायाः पृथगुपस्थितेः विद्यमानत्वात्। अतः फलविशिष्टव्यापारे व्यापारविशिष्टफले च धातोः शक्तिः। स्तोकं पचति इत्यादौ दोषवारणाय च पदार्थः पदार्थेनान्वेति इति न्याये धातुभिन्नपदनिवेशेन न दोष इत्याहुः। एवं कर्तृकर्मसंख्याकाला अपि तिङर्थाः। तत्र कर्तृकर्मणी फलव्यापारयोर्विशेषणीभूते, संख्या च कर्तृप्रयोगसमभिव्याहारे कर्तरि, कर्मप्रयोगसमभिव्याहारस्थले च कर्मणि विशेषणतयान्वेति। कालः व्यापारे विशेषणं प्रथमान्तार्थस्य च आख्यातार्थ आश्रयेऽभेदेन

1. प.ल.म.धात्वर्थप्रकरणम् 2. वै.भू.सा. प्रथमा कारिका

सम्बन्धेनान्वयः, आश्रयस्य च समवायसम्बन्धेन व्यापारे अन्वय इति बोध्यम्। तथा रामः ग्रामं गच्छति इत्यतः रामाभिन्नाश्रयकर्तृकः ग्रामनिष्ठकर्मतानिरूपकः प्राप्त्यनुकूलो वर्तमानकालिको व्यापार इति शाब्दबोधः सम्पद्यते। एवं भावप्रधानमाख्यातमिति यास्कोक्तवचसः प्रामाण्येन व्यापारमुख्यविशेष्यको बोधोऽङ्गीकृतः।

नागेशभट्टस्तु कर्तृप्रत्ययसमभिव्याहारस्थले व्यापारमुख्यविशेष्यकः शाब्दबोधः, कर्मप्रत्ययसमभिव्याहारस्थले तु फलमुख्यविशेष्यकं बोधमङ्गीकरोति। तत्र मानं तु "सुप आत्मनः क्यच्" इति सूत्रस्थं भाष्यमेव। तत्रोक्तं यत् पुत्रमिच्छति इत्यर्थे क्यच्प्रत्ययो भवति, इष्यते पुत्र इत्यर्थे क्यच्प्रत्ययो न भवति भिन्नार्थत्वादित्युक्तम्। यदि उभयत्र व्यापारमुख्यविशेष्यकबोधः स्वीक्रियेत तर्हि भिन्नार्थकत्वाभावात् भाष्यकारकथनमसंगतं स्यात्। अतः कर्तृप्रत्ययसमभिव्याहारस्थले व्यापारमुख्यविशेष्यकशाब्दबोधः कर्मप्रत्ययसमभिव्याहारस्थले च फलमुख्यविशेष्यकः शाब्दबोधः स्वीकार्यः। तथा सति पुत्रमिच्छति, इष्यते पुत्र इत्यत्र भाष्यकृता या अर्थद्वयी प्रतिपादिता सा नितरां संगच्छते। एवं कर्तृप्रत्ययस्थले प्राचोक्त एव बोधः, कर्मप्रत्ययस्थले च फलमुख्यविशेष्यको बोधः नागेशमते। न चास्मिन् पक्षे भावप्रधानमाख्यातमिति यास्कवचो विरुद्ध्येत इति वाच्यं तत्र भाव इति पदेन भाव्यते इति भावः, भाव्यते अनेन इति भाव इति व्युत्पत्त्या फलस्य व्यापारस्य चोभयोरपि ग्रहणं भवतीति न कदाचिदापत्तिः।

इत्थं सामान्यतः शाब्दबोधे निरूपिते तत्कार्यकारणभावं किञ्चिद् विमृशामः – अगृहीतवृत्तिकस्य पुरुषस्य विस्मृतवृत्तिकस्य वा कुतो न शाब्दबोधः, घटपटादिशब्दोच्चारणे आश्रयत्वेन उपस्थितस्य आकाशस्य कथं न प्रतीतिः, एवं घटादिपदानां जनकतया उपस्थितस्य चैत्रादेः कथं न भानमित्यादिसर्वं विमृशन् भट्टनागेशो निगदति यत् – "तद्धर्मावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मावच्छिन्ननिरूपितवृत्तिविशिष्टज्ञानं हेतुः, ज्ञाने वृत्तिवैशिष्ट्यञ्च स्वविषयकोद्बुद्धसंस्कार-सामानाधिकरण्यस्वाश्रयपदविषयकत्वोभयसम्बन्धेन बोध्यम्"[1] इति। अयं भावः शाब्दबोधं प्रति वृत्तिज्ञानं हेतुरित्येवोच्यमाने घटविषयकशाब्दबोधं प्रति पटविषयकवृत्तिज्ञानस्यापि हेतुत्वं स्यात्। तद्वारणाय तद्विषयकशाब्दबोधं प्रति तन्निरूपितवृत्तिज्ञानस्य हेतुतायाः स्वीकारेऽपि तद्विषयकं सकलशाब्दबोधं क्रोडीकर्तुं शाब्दबुद्धित्वावच्छिन्नं प्रति तन्निरूपितवृत्तिविशिष्टज्ञानं हेतुरिति वाच्यम्। एतादृशलक्षणस्वीकारेऽपि कदाचिद्विशेष्यविशेषणभावव्यत्यासेन घटत्वप्रकारकघटविशेष्यकवृत्तिज्ञानात् घटप्रकारकघटत्वविशेष्यकः शाब्दबोधः समुदीयादथवा घटप्रकारकघटत्वविशेष्यकवृत्तिज्ञानात् घटत्वप्रकारकघटविशेष्यको वा बोधः सम्भवेत्, तदर्थमुच्यते भट्टनागेशेन – "तद्धर्मावच्छिन्नविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मावच्छिन्ननिरूपित-वृत्तिविशिष्टज्ञानं हेतुः" इति। अत एव गुडादिशब्देन गुडत्वजात्यवच्छिन्नो गुडपदवाच्यः इत्येव जाति-प्रकारको बोधः। अत एव समर्थसूत्रे भाष्ये "न हि गुण इत्युक्ते मधुरत्वं प्रकारतया गम्यते इति भाष्यकृता प्रत्यपादि। मधुरत्वं तु गुडो मधुर ऐक्षवत्त्वात्"[2] इत्यनुमानरूपमानान्तरगम्यमिति परमलघुमञ्जूषायां नागेशः।

एवं चागृहीतवृत्तिकस्य विस्मृतवृत्तिकस्य तत्पदमजानतः घटपदादाश्रयत्वेनोपस्थितस्याकाशस्य जनकतयोपस्थितचैत्रादेश्च बोधवारणाय स्वविषयकोद्बुद्धसंस्कारसामानाधिकरण्यस्वाश्रयपद-विषयकत्वोभयसम्बन्धेन वैशिष्ट्यं प्रदीयते। एवञ्च घटशब्दात् पटविषयको बोधः, घटत्वप्रकार-कघटविशेष्यकबोध इव घटप्रकारकघटत्वविषेष्यकबोध इत्यादि सर्वोऽपि दोषो वारितो भवति।

1. प.ल.म.शक्तिप्रकरणम्
2. प.ल.म.शक्तिप्रकरणम्

ISSN - 0974-8946
अप्रैल-जून, 2017

शोधप्रभा
वर्षः 42, द्वितीयाङ्कः

# शिशुपालवधे अलङ्कारध्वनिविमर्शः

डॉ. जीवनकुमारभट्टराई*

**कृत्स्नप्रबोधकृद्वाणी भा-रवेरिव भारवेः।**
**माघेनेव च माघेन कम्पः कस्य न जायते।।**

कविराजराजशेखरस्य इयमुक्तिः माघप्रणीतशिशुपालवधमहाकाव्यस्य वैशिष्ट्यं द्योतयति। वस्तुतस्तु महाकविमाघः पूर्णतया आलङ्कारिकः कविर्वर्तते, तस्य अलङ्कारशास्त्रगतनिपुणता तु विशिष्टा एव। तन्मतानुसारं सत्कविः अजस्रं शब्दार्थयोरुभयोरपि अपेक्षां करोति। अर्थात् शब्दचयने अर्थगाम्भीर्यमपि विशिष्टमुपादानं भवतीति तस्य मतम्।

'काव्येषु माघः' प्रभृत्युक्तयोऽस्य कवेः संस्कृतसाहित्यजगति समादरं प्रकाशयन्ति। यथा कालिदासो ''वागार्थाविव सम्पृक्ताविति''[1] यथा च भारविः ''प्रसन्नगम्भीरपदा सरस्वतीति''[2] निगदन्तौ शब्दार्थौ निर्दिशतः, तथैवमाघोऽपि-

**नालम्बते दैष्टिकतां न निषीदति पौरुषे।**
**शब्दार्थौ सत्कविरिव द्वयं विद्वानपेक्षते।।[3]**

इति रूपेण काव्याधिकरणं काव्यशरीरं वा व्यनक्ति। माघेन बहुधा व्यङ्ग्यभङ्ग्योपमादि माध्यमेन काव्यतत्त्वानि निर्दिष्टानि सन्ति। एतेन तत्समीहितं काव्यस्वरूपं स्फुटीभवति। काव्यस्यास्य गौरवं सौरभं च अतुलनीयमिति हेतोः काव्यमिदं बृहत्त्रय्यामन्तर्गतमस्ति।

शिशुपालवधमहाकाव्ये अलङ्कारध्वनिविषयगतवर्णनं तत्तत्प्रसङ्गेषु स्थालीपुलाकन्यायेन यथामत्यत्र प्रस्तूयते।

ध्वनिवादिभिः सर्वप्रथमं व्यङ्ग्यस्य व्यञ्जनायाश्च प्रतिपादनं कृतम्। तैरेवप्रतीयमानार्थः काव्यस्य लावण्यमिति घोषितम्-

**प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।**
**यत्तत्प्रसिद्धावयवातिरिक्तं विभाति लावण्यमिवाङ्गनासु।।[4]**

व्यङ्ग्यरूपो ध्वनिस्त्रिधा भवति- वस्तुरूपः, अलङ्काररूपः, रसरूपश्च। एषु वस्तुतो रसरूपस्यैव ध्वनेः प्राधान्यम्। वस्त्वलङ्कारध्वनी रसध्वनावेव पर्यवस्यतः। तयोः **''काव्यस्यात्मा ध्वनिः''** इति सामान्यकथनेन वाच्यादुत्कर्षः प्रतीयते, न तयोरपि काव्यस्यात्मत्वम्। उक्तं च यथा-

* प्रूफ-रीडर, शोधप्रविभागः, श्रीलालबहादुरशास्त्रीराष्ट्रियसंस्कृतविद्यापीठम्

1. रघु. 1/1
2. किरात. 14.3
3. शिशु. 2.86
4. तत्रैव, 1/4

**काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।**
**क्रौञ्चद्वन्द्ववियोगोत्थः शोकः श्लोकत्वमागतः॥**[1]

तत्रैव लोचनटीकायाम् अभिनवगुप्तपादाचार्येण स्पष्टीकृतम्।[2]

पुनश्च आनन्दवर्धनाचार्यः प्रतिपादयति यत् काव्यशरीरभूता अप्यलङ्कारा ध्वन्यमानाः परां शोभां प्राप्नुवन्ति।[3] यत्र वस्त्वलङ्कारो वाभिव्यज्यते तत्र संलक्ष्यक्रमध्वनिरन्यत्र रसादौ व्यङ्ग्ये सत्यलक्ष्यक्रमो ध्वनिरित्यभिधीयते।

मम्मटेन काव्यप्रकाशे चतुर्थोल्लासे ध्वनिविवेचनप्रकरणे प्रतिपादितं यत्-

**अनुस्वानाभसंलक्ष्यक्रमव्यङ्ग्यस्थितिस्तु यः।**[4]

संलक्ष्यक्रमव्यङ्ग्यध्वनिः त्रिविधो भवति यथा-

''शब्दार्थोभयशक्त्युत्थस्त्रिधा स कथितो ध्वनिः।

-शब्दशक्तिमूलानुरणनरूपव्यङ्ग्यः अर्थशक्तिमूलानुरणनरूपव्यङ्ग्य उभयशक्ति-मूलानुरणनरूपव्यङ्ग्यश्चेति त्रिविधः।''[5]

शब्दशक्त्युद्भवध्वनेरपि भेदद्वयं वर्तते- 1.शब्दशक्तिमूलालङ्कारध्वनिः, 2.शब्दशक्ति -मूलवस्तुध्वनिश्च।

शब्दशक्तिमूलध्वनिविषये आचार्यआनन्दवर्धनेनोक्तं यत्-

''ननु शब्दशक्त्या यत्रार्थान्तरं प्रकाशते स यदि ध्वनेः प्रकार उच्यते तदिदानीं श्लेषस्य विषय एवापहृतः स्यात् नापहृत इत्याह-

**आक्षिप्त एवालङ्कारः शब्दशक्त्या प्रकाश्यते।**
**यस्मिन्ननुक्तः शब्देन शब्दशक्त्युद्भवो हि सः॥**

-यस्मादलङ्कारो न वस्तुमात्रं यस्मिन् काव्ये शब्दशक्त्याप्रकाशते स शब्दशक्त्युद्भवो ध्वनिरित्यस्माकं विवक्षितम्। वस्तुद्वये च शब्दशक्त्या प्रकाशमाने श्लेषः।''[6]

---

1. तत्रैव, 1/5
2. अधुना काव्यात्मत्वमितिहासव्याजेन च दर्शयति- काव्यस्यात्मेति। स एवेति प्रतीयमानमात्रेऽपि प्रक्रान्ते तृतीय एव रसध्वनिरिति मन्तव्यम्, इतिहासबलात् प्रक्रान्तवृत्तिग्रन्थार्थबलाच्च। तेन रस एव वस्तुत आत्मा, वस्त्वलङ्कारध्वनी तु सर्वथा रसं प्रति पर्यवस्येते इति वाच्यादुत्कृष्टौतावित्यभिप्रायेण 'ध्वनिः काव्यस्यात्मे'ति सामान्येनोक्तम्। -ध्वन्या. लोचनम्, पृ. 86
3. शरीरीकरणं येषां वाच्यत्वेन व्यवस्थितम्। तेऽलङ्काराः परां छायां यान्ति ध्वन्यङ्गतांगताः॥ -ध्वन्या. 2/28
4. का.प्र. 4/37
5. तत्रैव
6. ध्वन्या. 2/21, सवृत्तिः

काव्यप्रकाशकारोऽपि आनन्दवर्धनस्य मतमनुसृत्य उल्लिखति-

**अलङ्कारोऽथवस्त्वेव शब्दाद्यत्रावभासते।**
**प्रधानत्वेन स ज्ञेयः शब्दशक्त्युद्भवो द्विधा।।**[1]

व्यङ्ग्यरूपो ध्वनिर्वस्त्वलङ्ककाररूपत्वेन त्रिधा प्रोक्ता आचार्यैः। सर्वप्रथमम् आचार्यआनन्दवर्धनेन ध्वन्यालोकसंज्ञकग्रन्थविशेषस्य रचनां विधाय काव्यसमालोचनाक्षेत्रे नवीनः पन्थाः प्रदर्शितस्तेन हि काव्यात्मरूपेण ध्वनिरिति संज्ञितस्तत्त्वविशेषो विमृष्टस्तथा च शब्दस्यवाचकत्वलाक्षणिकत्वाभ्यां भिन्नं व्यञ्जकत्वं नूतनं तृतीयं विशेषणं निर्दिष्टं येन शब्दस्यार्थादिकस्य च व्यञ्जनाख्यो व्यापारविशेषो विवेचितस्ततो हि भरतभामहादिभिः प्रकाशितानाम् उपमाप्रभृतीनामलङ्काराणां व्यङ्ग्यत्वमपि विचारपथे समायातम्।

आनन्दवर्धन-मम्मटाचार्यादिभिः काव्यशास्त्रिभिः महाकविमाघस्य शिशुपालवधस्य नैकानि पद्यानि स्वग्रन्थेषु विविधालङ्कारविच्छित्तिविवेचनावसरे समुदाहृतानि। विंशतिसर्गात्मके शिशुपालवधमहाकाव्ये शताधिकपद्येषु भिन्न-भिन्नप्रसङ्गेषु टीकाकारैः विभिन्नानां व्यङ्ग्यालङ्काराणां गुणीभूतत्वं ध्वनित्वञ्च विवेचितमस्ति तत्रापि प्रसिद्धटीकाकारेण कोलालाचलमल्लिनाथेन सर्वङ्कषाटीकायां स्पष्टरूपेण व्यङ्ग्यालङ्काराः प्रकाशिताः वर्तन्ते। तत्तत्प्रसङ्गेषु टीकाकारविवेचनं समाश्रित्य कतिपयानि अलङ्कारध्वनेरुदाहरणान्यत्र प्रस्तूयन्ते।

महाकविमाघेन शिशुपालवधस्य प्रथमसर्गस्यारम्भे द्वारिकायां वसुदेवसद्मनिस्थितेन श्रीकृष्णेन आकाशादवतरतो मुनिनारदस्य दर्शनं कृतमिति वर्णनप्रसङ्गे व्यतिरेकालङ्कारध्वनिरुद्भावितः। तद्यथा-

**गतं तिरश्चीनमनूरुसारथेः प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः।**
**पतत्यधो धामविसारि सर्वतः किमेतदित्याकुलमीक्षितं जनैः।।**[2]

पद्येऽस्मिन् विस्मयकरत्वं वर्णितं तथा च सूर्याग्निभ्यां सह मित्रत्वं निर्दिष्टम् अत एवात्र वस्तुना व्यतिरेकालङ्कारध्वनिर्मन्तव्यः। पद्यस्यास्य व्याख्यायां टीकाकारः आचार्यमल्लिनाथोल्लिखति-

**''अत्रोपमेयस्य मुनिधाम्नः सूर्याग्निभ्योमुपमानाभ्यामधः प्रसरणधर्मेणाधिक्यवर्णनाद् व्यतिरेकः।** तदुक्तं काव्यप्रकाशे- **'उपमानाद्यदन्यस्य व्यतिरेकः स एव सः'** इति।''[3]

तदनन्तरं प्रथमसर्गस्य त्रयोविंशे पद्ये नारददर्शनजन्यमुदोजगन्निवासभूतस्य श्रीकृष्णस्य हृदयेनैव मुमुरिति वर्णनप्रसङ्गे[4]अर्थशक्तिमूलः कविप्रौढोक्तिसिद्धेन अलङ्कारेणालङ्कारध्वनिः प्रतिपद्यते। तत्र सर्वङ्कषाटीकायां मल्लिनाथेन विलिखितम्-

**''चतुर्दशभुवनभरणपर्याये वपुषि (मुदः) अन्तर्नमान्तीति कविप्रौढोक्तिसिद्धातिशयेन स्वतः सिद्धसंबन्धेऽप्यसंबन्धोक्त्या संबन्धासंबन्धरूपः।''**[5] इत्थं हि आचार्यमल्लिनाथः स्पष्टशब्दैः कविप्रौढोक्तिसिद्धेनालङ्कारेणालङ्कारध्वनिमत्र प्रदर्शयति।

1. का.प्र. 4/38
2. शिशु. 1/2
3. तत्रैव, सर्वङ्कषाटीका, पृ.2 (मल्लि.)
4. युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकासमासत्। तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसंभवा मुदः।। शिशु. 1/23
5. शिशु. 1/23, सर्वङ्कषाटीका, पृ. 17 (मल्लि.)

अस्मिन्नेव सर्गे द्वात्रिंशत्तमे पद्ये शब्दशक्त्युद्भव-अलङ्कारध्वनिर्व्यज्यते। नारदवचनप्रसङ्गे प्रतिपादयति कविः-

**उदीर्णरागप्रतिरोधकं जनैरभीक्ष्णमक्षुण्णतयाऽतिदुर्गमम्।**
**उपेयुषो मोक्षपथं मनस्विनस्त्वमग्रभूमिर्निरपाय संश्रया।।[1]**

पद्येऽस्मिन् चौरजनव्याप्ते दुर्गमे सज्जनान्तैररक्षुष्णे वनमार्गे गतस्य व्यापारिणस्तुलना दुर्गममोक्षपथगामिना भगवद्भक्तेन सहकृता। उक्तपद्ये **'प्रतिरोधक'** शब्दः नानार्थको विद्यते। तत्र सर्वङ्कषाटीकायाम् अमरकोषवचनमपि निर्दिटं वर्तते- **''प्रतिरोधिपरास्कन्दिपाटच्चरमलिमुचा''** इति। अस्य पद्यस्य व्याख्याने टीकाकारेण मल्लिनाथेन उल्लिखितं यत् **''उदीर्ण उद्रिक्तो रागो विषयाभिलाषः, स एव प्रतिरोधकः प्रतिबन्धकः पाटच्चरश्च यस्मिन्निति।''** अनेन सहात्र पाटच्चररूपोऽर्थोऽपि चर्चितस्तस्य संगतिर्दुर्गभवनमार्गविषये भवति।

अत्र **'प्रतिरोधक-निरपायौ'** शब्दौ नानार्थकतां भजेते। तेन हि मोक्षमार्गप्रवृत्तस्य जनस्य वर्णनेन साकं पाटच्चरदुष्टजनव्याप्तेदुर्गमकान्तारे प्रविष्टस्य जनस्य वर्णनं ध्वन्यते। तच्चोपमानता व्यञ्जनया ज्ञायते अतएव पदगतः शब्दशक्तिमूलो अलङ्कारध्वनिरत्र स्वीकर्तव्यः।[2]

महाकाव्यस्यास्य द्वितीये सर्गे कविना नारदमुखात् दुष्टस्य शिशुपालस्य बध्यता विवेचिताऽस्ति। तत्र सर्गस्यान्ते अष्टनवतितमे पद्ये अलङ्कारध्वनिः परिलक्ष्यते-

**ये चान्ये कालयवनशाल्वरुक्मिद्रुमादयः।**
**तमःस्वभावास्तेऽप्येनं प्रदोषमनुयायिनः।।[3]**

अत्र महाकविमाघेन दुष्टशिशुपालस्य विशेषणं 'प्रदोषम्' इति कृतम्। पदमिदं नानार्थवाचकं विद्यते। यथा टीकाकारबल्लभदेवः **प्रकृष्टदोष**मिति अर्थं स्वीकरोति तत्रैव मल्लिनाथस्तु **प्रकृष्टदोषकरः रात्रिप्रारम्भसमयश्चेति** प्रतिपादयति। अतोऽत्र द्वावर्थौ विज्ञायेते तथैव शिशुपालानुयायिनः कालयवनादयः तमःस्वभावा इति सङ्केतयति। यथा टीकाकारः वल्लभदेवः- **तामसाः क्रोधप्रकृतयः, सदृशाश्च-सदृशैर्युज्यन्ते** इति। अनेन प्रदोषकालस्य शिशुपालस्य चौपम्यं व्यज्यते। आचार्यमल्लिनाथेन अस्य श्लोकस्य टीकायां **वस्तुना अलङ्कारध्वनि**रिति प्रकाशितः।[4]

शिशुपालवधस्य तृतीससर्गस्य पद्यमेकं ध्वनिसम्प्रदायप्रस्थापकेन आचार्यआनन्दवर्धनेन ध्वन्यालोकस्य द्वितीयोद्योते श्लेषालङ्कारध्वनि-विवेचने उदाहरणरूपेण प्रकाशितम्। तद्यथा-

**रम्या इति प्राप्तवतीः पताका रागं विविक्ता इति वर्धयन्तीः।**
**यस्यामसेवन्त नमद्वलीकाः समं वधूभिर्वलभीर्युवानः।।[5]**

1. शिशु.1/32
2. तत्रैव, द्र. सर्वङ्कषाटीका (मल्लि.)
3. शिशु. 2/98
4. द्र. शिशु. 2/98, सर्वङ्कषाटीका (मल्लि.)
5. शिशु. 3/53, ध्वन्या. द्वि.उ. पृ.40

अस्मिन् श्लोके श्लेषालङ्कारध्वनिर्व्यज्यते। अस्य पद्यस्यस्पष्टविवेचनम् आनन्दवर्धनाऽचार्येण एवं कृतम्- **''अत्र वधूभिः सह वलभीरसेवन्तेति वाक्यार्थ- प्रतीतेरनन्तरं वध्व इव वलभ्य इति श्लेषप्रतीतिरशब्दाऽप्यर्थसामर्थ्यान्मुख्यत्वेन विवर्तते।''**[1]

माघकाव्यस्य चतुर्थे सर्गे रैवतकपर्वतवर्णनप्रसङ्गे कविना प्रतिपादितम्-

**आच्छादितायतदिगम्बरमुच्चकैर्गामाक्रम्य संस्थितमुदग्रविशालशृङ्गम्।**
**मूर्ध्नि स्खलत्तुहिनदीधितिकोटिमेनमुद्वीक्ष्य कोभुवि न विस्मयतेनगेशम्।।**[2]

पद्येऽस्मिन् रैवतकपर्वतवर्णने प्राकरणिकोऽर्थस्तु रैवतकनामकस्य नगेशस्य गिरेः विषये अवबोध्यते। परं नगेशशब्दाभिधेयशिवस्य विषयेऽपि विशेषणपदानि सङ्गच्छन्ते। अनेन अप्राकरणिकस्य शिवस्यापि प्रतीतिर्भवति।

पद्यस्यास्य व्याख्यानावसरे टीकाकार आचार्यमल्लिनाथः **तुल्ययोगितासमासोक्तिभ्यां सह श्लेषालङ्कारस्यापि** वाच्यालङ्कारूपेण सङ्केतं करोति। तथा च टीकायाऽन्ते तेन प्रकाशितम्- **''तस्मात् प्राकरणिकार्थमात्रपर्यवसिताभिधाव्यापारेणापि शब्देनार्थान्तरधीकृद्ध्वनि रित्याहुः।''**[3] अतएवात्र शब्दशक्तिसमुद्भवः श्लेषालङ्कारध्वनिः स्वीक्रियते।

महाकाव्यस्यास्य पञ्चमे सर्गे श्रीकृष्णस्य ससैन्यं रैवतकपर्वतविहारवर्णने कविना विरचितं पद्यमिदम्-

**त्रासाकुलः परिपतन् परितो निकेतान्, पुंभिर्नकैश्चिदपि धन्विभिरन्वबन्धि।**
**तस्थौ तथापि न मृगः क्वचिदङ्गनानामाकर्णपूर्णनयनेषु हतेक्षणश्रीः।।**[4]

प्रसङ्गेऽस्मिन् उत्प्रेक्षालङ्कारो ध्वन्यते। अस्य पद्यस्य व्याख्यानावसरे मल्लिनाथेन उल्लिखितम्-

**''अत्र जनालोकनोत्थभयहेतुकस्य मृगावस्थानस्वाङ्गेषु हतिहेतुकत्वात्प्रेक्षणाद्धेतूत्प्रेक्षा। सा च व्यञ्जका प्रयोगात् प्रतीयमाना। हेतोश्च हतेक्षणश्रीरिति गत्योक्तत्वात् काव्यलिङ्गमिति सङ्करः।''**[5]

पुनः षष्ठे सर्गे शिशिरवर्णनप्रसङ्गे महाकविमाघेन प्रस्तुतं पद्यमिदं यत्र अङ्कारध्वनिर्व्यज्यते-

**कुसुमयन् फलिनीरलिनीरवैर्मदविकासिभिराहितहुङ्कृतिः।**
**उपवनं निरभर्त्सयतप्रिया वियुवतीर्युवतीः शिशिरानिलः।।**[6]

अस्मिन् पद्ये विरहिणीनां शिशिरानिलेन कृतं निर्भत्सनं कविनावर्णितमतोहि तत्राचेतने शिशिरानिले चेतनत्वं परिकल्प्य निर्भत्सनाख्यस्य चेतनधर्मस्योत्प्रेक्षा कृता। पद्यस्यास्य व्याख्यने टीकाकारोमल्लिनाथेन स्पष्टीकृतं यत्- ''अत्र वायौ अचेतने चेतनधर्मोनिर्भर्त्सनमुत्प्रेक्ष्यते सा चालिनीहुङ्कार-झङ्काराजीवितेति रूपकसङ्कीर्णा व्यञ्जकाप्रयोगाद्गम्या च''[7]।

1. ध्वन्या. द्वि.उ. पृ.40
2. शिशु. 4/19
3. शिशु. 4/19, सर्वङ्कषाटीका (मल्लि.)
4. शिशु. 5/26
5. शिशु. 5/26, सर्वङ्कषाटीका (मल्लि.)
6. शिशु. 6/62
7. शिशु. 6/62, सर्वङ्कषाटीका (मल्लि.)

अत्र अलङ्कारध्वनेर्वैशिष्ट्यं तु विद्यते एव यद्धि यमकालङ्कारचमत्कारेण सहैव व्यङ्ग्यालङ्कारचमत्कारोऽपि ध्वन्यते।

महाकाव्यस्यास्य सप्तमे सर्गे श्रीकृष्णस्य रैवतकस्थितेषु वनेषु विहारवर्णने कविना अनेकत्रालङ्कारध्वनेः समावेशः कृतः। तेषु एकस्मिन् पद्ये नायिकामुखकमलसमीपे भ्रमतो भ्रमरस्य व्यवहारं प्रकाशयतः प्रियतमस्य उक्तावलङ्कारध्वनिः परिलक्ष्यते-

**सरजसमकरन्दनिर्भरासु प्रसवविभूतिषु भूरुहां विरक्तः।**
**ध्रुवममृतपनामवाञ्छयासावधरममुं मधुपस्तवाजिहीते।।[1]**

पद्येऽस्मिन् **'मधुप'** इति भ्रमरस्य प्राकरणिकस्यार्थस्य बोधो भवति तत्रैव व्यञ्जनया अप्राकरणिकस्य मद्यपस्य प्रतीतिर्भवति। अनेनात्र शब्दशक्तिमूलो ध्वनिः विलसति।

शिशुपालवधमहाकाव्यस्य नवमे सर्गे सूर्यास्तसमयादिवर्णनप्रसङ्गेऽपि अलङ्कारो ध्वन्यते। तद्यथा-

**पतिते पतङ्गमृगराजि निजप्रतिबिम्बरोषित इवाम्बुनिधौ।**
**अथ नागयूथमलिनानि जगत्परितस्तमांसि परितस्तरिरे।।[2]**

अत्र पतङ्गशब्दाभिहिते सूर्ये मृगराजत्वस्य सिंहत्वस्यारोपो वर्तते। अस्य श्लोकस्य सर्वङ्कषाटीकायां मल्लिनाथ उल्लिखिति- **''तत्रोत्प्रेक्ष्या भ्रान्तिमदुपमया रूपकञ्च व्यज्यते''।[3]**

अपि च द्वादशे सर्गे महाकविमाघेन श्रीकृष्णानुचरणानां राज्ञां शिविरप्रस्थानं वर्णितम्। तत्र सैन्यप्रस्थानवर्णने सैन्यसमूहस्य भूधरौपम्यमित्थं प्रस्तुतम्-

**भेरीभिराक्रष्टमहागुहामुखो ध्वजांशुकैस्तर्जितकन्दलीवनः।**
**उत्तङ्गमातङ्गजितालघूपलो बलैः स पश्चात्क्रियते स्म भूधरः।।[4]**

पद्यस्यास्य व्याख्यानावसरे टीकाकारेण मल्लिनाथेन प्रकाशितं यत्- **''अत्र पश्चात्करण-स्याऽऽक्रुष्टादिपदार्थहेतुकत्वात् काव्यलिङ्गम्। तच्च प्रतीयमानाभेदाध्यवसायाद् श्लेषमूलातिशयोक्त्या सङ्कीर्णम्। ततश्च बलानां भूधरौपम्यं व्यज्यतेऽत एवालङ्कारेणालङ्कारध्वनिर्मतः''।[5]**

इत्थं शिशुपालवधमहाकाव्यस्य परिशीलनेन ज्ञायते यदत्र व्यङ्ग्यालङ्कारचमत्कारः सर्वेष्वपि सर्गेषु ध्वन्यते। यद्यपि मयाऽत्र काँश्चन प्रसङ्गानाश्रित्य यथामति अलङ्कारध्वनेरुदाहरणानि प्रस्तुतानि किन्तु, अन्यत्रापि अस्माभिः तथैव बोध्यम्।

---

1. शिशु. 7/42
2. शिशु. 9/18
3. द्र. शिशु. 9/18, सर्वङ्कषाटीका (मल्लि.)
4. शिशु. 12/27
5. तत्रैव, सर्वङ्कषाटीका (मल्लि.)

ISSN - 0974-8946
अप्रैल-जून, 2017

शोधप्रभा
वर्ष: 42, द्वितीयाङ्कः

# अपां प्रणयनकर्म एवं अपां सादनोपपत्ति

डॉ. सुन्दरनारायणझा*

**अग्निवायुरविभ्यस्तु त्रयं ब्रह्म सनातनम्।**
**दुदोह यज्ञसिद्ध्यर्थमृग्यजुस्सामलक्षणम्।।**[1]

तथा- **वेदा हि यज्ञार्थमभिप्रवृत्ताः**[2] इन दोनों मनु एवं लगधमुनि के कथनों द्वारा यह स्पष्ट होता है कि वेदों से यज्ञ उत्पन्न हुए हैं। किन्तु विश्वप्रसिद्ध ऋग्वेद के पुरुषसूक्त में तो यज्ञ से ही वेदों की उत्पत्ति तथा समस्त प्रपञ्चों की उत्पत्ति कही गई है। यथा- **तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे। छन्दाᳬसि जज्ञिरे तस्मात्तस्माद्यजुस्तस्मादजायत।**[3] इति। इससे आगे के मन्त्रों में समस्त प्रपञ्चों की उत्पत्ति वर्णित है। उक्त द्विविध कथन से यह स्पष्ट होता है कि वेद से यज्ञ हुए या यज्ञ से वेद हुए यह विषय अत्यन्त विचारणीय है। परन्तु इतना स्पष्ट ही है कि वेद सृष्टिकम की वाणी है। श्वेताश्वतरोपनिषद् में कहा गया है- **यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै। तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये।।**[4] अर्थात् जो परमेश्वर निश्चयरूप से सबसे पहले ब्रह्मा को उत्पन्न करता है और जो ब्रह्मा को समस्त वेदों का ज्ञान प्रदान करता है, उस परमात्मज्ञानविषयक बुद्धि को प्रकट करनेवाले परमेश्वर की शरण में मोक्ष की कामना से मैं जाता हूँ।

श्वेताश्वतर श्रुति के कथनानुसार वेद सबसे पहले हुए यह सिद्ध होता है। इस प्रकार के कथन अन्यत्र भी प्राप्त होते हैं। यथा- **एवं वा अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसश्च।**[5] अर्थात् परब्रह्म परमात्मा के निःश्वास में वेद शब्दब्रह्म के रूप में सदा विद्यमान रहते हैं। वह शब्दराशि वेद मन्त्र, ब्राह्मण, आरण्यक एवं उपनिषद् के नाम से

---

* सहायकाचार्यः, वेदविभागस्य, श्री.ला.ब.शा.रा.सं.विद्यापीठम्, नवदेहली-16

1. मनुस्मृति- 1/23
2. वेदाङ्गज्योतिष- श्लोक-3
3. ऋग्वेद- 10/90/9, यजुर्वेद- 31/7, अथर्ववेद-19/6/13, तै.आ.- 3/12/4
4. श्वेताश्वतरोपनिषद्- 6/18
5. बृहदारण्यकोपनिषद्- 4/4/10

लोकप्रसिद्ध हैं। वेद के मन्त्रों में जिन कर्मों के निर्देश हैं, उनके विधिपूर्वक साङ्गोपाङ्ग वर्णन ब्राह्मणादि ग्रन्थों में किये गये हैं।

जैसा कि हमलोग जानते हैं कि संहिता भेद से वेद चार, स्वरूपभेद से तीन, शाखाभेद से एक हजार एक सौ इकतीस (1131) तथा ब्राह्मणारण्यकोपनिषद् भेद से अनन्त हैं। अत एव तैत्तिरीय ब्राह्मण में **अनन्ता वै वेदा:**[1] कहा गया है। वस्तुत: वेद ब्रह्म का शब्दात्मक रूप होने के कारण ब्रह्म नाम से ही पुकारा जाता है। वह सत्य पर आधारित है, अत: उसे सत्यज्ञान भी कहते हैं। उसी को लक्ष्य करके श्रुति कहती है- **सत्यं ज्ञानमनन्तं ब्रह्म।**[2] ब्रह्म के अनन्त होने के कारण वेद का आनन्त्य स्वत: सिद्ध होता है। गोस्वामी तुलसीदासजी ने श्रीरामचरितमानस में लिखा है- **हरि अनन्त हरि कथा अनन्ता। कहहिं सुनहिं बहुबिधि सब सन्ता।।**[3] अर्थात् परमेश्वर स्वयं अनन्त हैं उनकी कथा भी अनन्त हैं। वेदों में परमेश्वर के स्वरूप का वर्णन यज्ञात्मकतया किया गया है, अत: कथारूप ही हैं इसलिए भी अनन्त हैं।

वेदों में मुख्यत: तीन काण्डों- कर्मकाण्ड, ज्ञानकाण्ड एवं उपासनाकाण्डों द्वारा विश्व के समस्त ज्ञानविज्ञानात्मक विषयों का वर्णन किया गया है। यजुर्वेद का प्रतिपाद्य विषय कर्मकाण्ड ही है। अत: वेदों में यजुर्वेद का अन्यतम स्थान है। यजुर्वेद के दो विभाग शुक्ल एवं कृष्ण हैं। शुक्लयजुर्वेद का ब्राह्मणग्रन्थ शतपथ ब्राह्मण है। एक सौ अध्यायों में विभक्त होने के कारण इसे शतपथ कहते हैं। **ब्रह्म हि यज्ञ:**[4] इस श्रौतवाक्य द्वारा यज्ञ ही ब्रह्म है, ऐसा स्पष्ट किया गया है। ब्रह्मकर्म अर्थात् यज्ञकर्म का साङ्गोपाङ्ग वर्णन यहाँ है अत: इसे ब्राह्मण कहते हैं। यद्यपि विविध आचार्यों ने ब्राह्मणशब्द का अलग-अलग लक्षण प्रस्तुत किया है। यथा- **शेषे ब्राह्मणशब्द:**[5] ऐसा आचार्य जैमिनि ने कहा है। तैत्तिरीयसंहिता का भाष्यकार आचार्य भट्ट-भास्कर ने ब्राह्मण का लक्षण **ब्राह्मणं नाम कर्मणस्तन्मन्त्राणाञ्च व्याख्यानग्रन्थ:**[6] ऐसा किया है। आचार्य आपस्तम्ब ने- **कर्मचोदना ब्राह्मणानि**[7] कहकर यह स्पष्ट किया है कि कर्म की ओर प्रेरित करनेवाली विधियाँ **ब्राह्मण** हैं। सभी वेदशाखाओं के पृथक्-पृथक् ब्राह्मणग्रन्थ उपलब्ध होते हैं। इन ब्राह्मणग्रन्थों में शतपथब्राह्मण स्वरूप एवं विषयप्रतिपादन की दृष्टि से महत्त्वपूर्ण एवं विशालतम है।

---

1. तैत्तिरीयब्राह्मण- 3/10/11/3-4
2. तैत्तिरीयोपनिषद्-2/1/1
3. श्रीरामचरितमानस- बालकाण्ड-दोहा-140
4. श.प.ब्रा.- 5/3/2/4
5. मीमांसा- 2/1/33
6. तै.सं.- 1/5/1 पर भाष्य।
7. आप. परि.- 34/35

## शतपथब्राह्मण का स्वरूप एवं शैली

महर्षि कात्यायन ने- **विधिर्निन्दाप्रशंसाध्यात्ममधिदैवतमधिभूतमनुवचनं परकृतिः पुराकल्पः सृष्टिरिति ब्राह्मणम्।**[1] कहकर एकादशविध बताया है। वृद्धवाचस्पतिमिश्र ने कुछ भिन्न स्वरूप प्रतिपादित करते हुए चार तत्त्वों का निर्देश किया है। यथा-

**नैरुक्त्यं यस्य मन्त्रस्य विनियोगः प्रयोजनम्।**
**प्रतिष्ठानं विधिश्चैव ब्राह्मणं तदिहोच्यते॥**

**इत्येवं याज्ञवल्क्यस्य ब्राह्मणस्य तु लक्षणम्।**

बृहदारण्यकोपनिषद् में- **इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानानि।**[2] कहकर अष्टविध ब्राह्मण का प्रतिपादन किया गया है। मीमांसा दर्शन के भाष्य में शबरस्वामी ने-

**हेतुर्निर्वचनं निन्दा प्रशंसा संशयो विधिः।**
**परक्रिया पुराकल्पो व्यवधारणकल्पना।**
**उपमानं दशैते तु विधयो ब्राह्मणस्य वै॥**[3]

कथन द्वारा ब्राह्मणग्रन्थ के दशविध स्वरूपों का प्रतिपादन किया है। कहने का तात्पर्य है कि सर्वप्रथम ब्राह्मणग्रन्थ किसी कार्य का हेतु बताता है। शतपथब्राह्मण के प्रथमाध्याय में समस्त कामनाओं की सिद्धि के निमित्त दर्शपौर्णमासयाग का वर्णन किया गया है। दर्श एवं पौर्णमास इन दोनों यागों में पौर्णमास ही प्रमुख है। इसलिए अग्नि परिग्रह के बाद पौर्णमासयाग से ही अनुष्ठान प्रारम्भ होता है। अमावास्या को दर्श तथा पूर्णिमा को पौर्णमास कहते हैं। ये दोनों मिलकर एक कृत्य माना जाता है। अतः एक का अनुष्ठान करने के बाद दूसरे का अनुष्ठान अनिवार्यतया करना आवश्यक होता है।

पौर्णमास के पूर्वदिन अग्न्यन्वाधान किया जाता है। अतः उस दिन यजमान एवं पत्नी यथाविहित क्षौरकर्म कराकर दैनिक आह्निक कृत्य (सन्ध्या, तर्पण, अग्निहोत्रादि) से निवृत्त होकर कर्म का सङ्कल्प करे। तदुपरान्त भूशुद्धि कर अग्न्यन्वाधान, व्रतोपायन, ऋत्विग्वरणादि (याजमान) कर्म सम्पन्न होने के उपरान्त अध्वर्यु प्रणीताप्रणयन हेतु प्रवृत्त होता है। यहाँ से अध्वर्यु का कार्य आरम्भ होता है। इस प्रणीता-प्रणयन कर्म को ही **अपां प्रणयन** कहते हैं। उक्त कर्म का सहेतुक निरूपण यथाशास्त्र किया जा रहा है।

---

1. कात्यायन तृ.प्र.प.सूत्र।
2. बृहदारण्यकोपनिषद्- 2/4/10
3. मीमांसा सूत्र, शाबरभाष्य- 2/18

**अपां प्रणयन कर्म**

**प्र** उपसर्गपूर्वक **नी** धातु में **अच्** प्रत्यय करने पर **प्रणयः** शब्द बनता है जिसका अर्थ- विवाह, पाणिग्रहण, प्रेम, स्नेह, अनुरक्ति आदि होता है। **प्र+नी+ल्युट्** द्वारा **प्रणयनम्** शब्द निष्पन्न होता है जिसका अर्थ लाना, ले आना, सञ्चालन करना, पहुँचाना, पालन करना, कार्यान्वयन तथा अनुष्ठान करना आदि होता है। विशेषरूप से लिखना, अक्षरयोजन करना, निर्णयादेश देना आदि अर्थ भी घटित होता है। **प्रणयनं नाम प्रकर्षेण नयनमिति अर्थात् समक्षमुपस्थापनमिति चोच्यते।** अर्थात् जहाँ जल को लाने का कार्य किया जाता है, उसे अपां प्रणयन कर्म कहते हैं। इस विषय में शतपथ श्रुति कहती है- **स वै प्रातरप एव प्रथमेन कर्मणाभिपद्यतेऽपः प्रणयति यज्ञो वा आपो यज्ञमेवैतत्प्रथमेन कर्मणाभिपद्यते ताः प्रणयति यज्ञमेवैतद्वितनोति।।**[1] अध्वर्यु जो प्रातः कालीन कर्म आरम्भ करता है उसमें उसे सबसे पहला काम जल से पड़ता है। इसलिए वह जल को ही सबसे पहले लाता है। जल को जिस पात्र में लाकर रखता है, उसे (प्रकर्षेण नीता आपो यस्यां सा प्रणीता) प्रणीता कहते हैं। यहाँ प्रश्न उठता है कि जल को ही क्यों लाता है? तो उत्तर देते हैं कि **यज्ञो वा आपः** अर्थात् जल यज्ञाङ्ग होने के कारण साक्षात् **यज्ञरूप** है। इस प्रकार सबसे पहले अपां प्रणयन कर्म (जल को प्राप्त करने के कर्म) द्वारा वह यज्ञ को प्राप्त करता है। तात्पर्य यह है कि जल को आगे लाने के द्वारा अध्वर्यु यज्ञ को आगे लाता (विस्तारित करता) है।

अब यज्ञ को विस्तारित करने का उद्देश्य बताने के लिए अपां प्रणयन कर्म की **प्रथम उपपत्ति** प्रस्तुत करते हुए ऋषि याज्ञवल्क्य कहते हैं- **स प्रणयति। कस्त्वा युनक्ति स त्वा युनक्ति कस्मै त्वा युनक्ति तस्मै त्वा युनक्तीत्येताभिरनिरुक्ताभिर्व्याहृतिभिरनिरुक्तो वै प्रजापतिः प्रजापतिर्यज्ञ- स्तत्प्रजापतिमेवैतद् यज्ञं युनक्ति।।**[2] यहाँ यजुर्वेदीय **कस्त्वा युनक्ति** इति प्रश्नोत्तरात्मक मन्त्र (1/6) प्रयुक्त है। इसका तात्पर्य है कि यह सम्पूर्ण यज्ञ परमार्थतः प्रजापति की प्राप्ति के उद्देश्य से किया जा रहा है। प्रजापति अनिरुक्त (रहस्यमय) है। इसी हेतु से रहस्यात्मक सर्वनाम पद **कः तथा तत्** द्वारा मन्त्र में प्रश्नोत्तरात्मक अभिनय प्रस्तुत किया गया है। वह अध्वर्यु प्रणयन करता हुआ अर्थात् प्रणीता में घड़े से जल डालता हुआ मन्त्र पढ़ता है- **कौन तुझको यज्ञ से जोड़ता है? वस्तुतः वह (प्रजापति) ही तुझको जोड़ता है। किस (प्रयोजन) के लिए तुझको जोड़ता है? उस (प्रजापति) के लिए तुझको जोड़ता है।** उक्त मन्त्रांश में कौन, वह, उस आदि सर्वनामपद का प्रयोग अनिरुक्त अर्थात् अत्यन्त रहस्यात्मक ढंग से किया गया है। तैत्तिरीयब्राह्मण में- **को ह वै नाम प्रजापतिः**[1] कहकर **कः** सर्वनाम द्वारा प्रजापति को बतलाया गया है। वह प्रजापति अनिरुक्त (रहस्यमय) है। प्रजापति यज्ञ है। इस प्रकार जल (प्रणयन द्वारा) प्रजापति अर्थात् यज्ञ की योजना करता है।

---

1. श.प.ब्रा.-1/1/1/12
2. श.प.ब्रा.-1/1/1/13
3. तै.ब्रा.- 2/2/10

यहाँ यह विचार किया जाता है कि यज्ञ भी प्रजापति है तथा यज्ञ के माध्यम से प्राप्तव्य (साध्य) परमात्मा भी प्रजापति है। फिर प्रजापति के लिए प्रजापति को जोड़ता है यह कहने का तात्पर्य क्या है? तो यह कहा जा सकता है कि आचार्य पाणिनि ने **देवपूजासङ्गतिकरणदानेषु** सूत्र द्वारा यज्ञ पद को सिद्ध किया है। यहाँ उसी सन्दर्भ को स्पष्ट करने के लिए परस्परोपकारक अनेक शक्तियों के सङ्गतिकरण को बताया गया है। यज्ञ यजमान के लिए प्रजापति है और परमेश्वर यज्ञ का प्रजापति है। इस प्रकार लघुप्रजापतिरूप यज्ञ को महान् प्रजापति परमेश्वर के साथ जोड़ता है। तभी यज्ञ का ब्रह्मार्पणत्व[1] सिद्ध हो पाता है। वह परमेश्वर पूर्ण है उससे यज्ञ की सङ्गति कराकर यज्ञ को पूर्णता से युक्त करता है यह अभिप्राय व्यक्त होता है। इस प्रकार अपां प्रणयन कर्म की एक उपपत्ति बतलाकर अब आपः शब्द का अर्थ स्पष्ट करती हुई ब्राह्मणश्रुति **द्वितीय उपपत्ति** प्रस्तुत करती है-

**यद्वेवापः प्रणयति। अद्भिर्वाऽइदꣳसर्वमाप्तं तत्प्रथमेनेवैतत्कर्मणा सर्व्वमाप्नोति।**[2] अर्थात् यह जो जल का प्रणयन करता है इसका कारण है कि **आपः** का अर्थ ही सब कुछ प्राप्त करानेवाली है। क्योंकि यह समस्त सृष्टि जल से व्याप्त है। जैसा कि ऋग्वेद के नासदीय सूक्त में कहा गया है- **अप्रकेतं सलिलं सर्वमा इदम्।**[3] इस प्रकार अध्वर्यु पहला ही कर्म ऐसा करता है जिससे सब कुछ प्राप्त हो जाता है। वस्तुतः अध्वर्यु को यज्ञ का नेता कहा गया है।[4] जिस प्रकार जंगल का नेता सिंह होता है उसी प्रकार यज्ञ का नेता अध्वर्यु है। सिंह जिस प्रकार शिकार को प्रथम प्रयास में ही स्वाधीन कर लेने के लिए समस्त उपाय पहले सोच लेता है, उसी प्रकार यह अध्वर्यु भी यज्ञ का फल प्राप्त करने के लिए तत्सम्बन्धी समस्त तैयारी पहले कर लेता है। इसी हेतु से वह विश्व की समस्त कामनाओं को धारण करने वाली आपः का सर्वप्रथम प्रणयन करता है ताकि अभीष्ट फल की प्राप्ति में कोई दिक्कत न हो। पुनः यह चिन्तन किया जाता है कि आपः सबकुछ प्राप्त करानेवाली है ऐसा जो कहा गया है इस कथन में सबकुछ का तात्पर्य क्या है? तो ऋषि उत्तर देते हुए अपां प्रणयन कर्म की **तीसरी उपपत्ति** प्रस्तुत करते हैं- **यद्वेवास्यात्र होता वाऽध्वर्युर्वा ब्रह्मा वाऽग्नीध्रो वा स्वयं वा यजमानो नाभ्यापयति तदेवास्यैतेन सर्वमाप्तं भवति।।**[5] अर्थात् इस यज्ञ में जो कुछ भी होता, अध्वर्यु, ब्रह्मा तथा आग्नीध्र प्राप्त नहीं करा सकते, यहाँ तक कि स्वयं यजमान भी अपने आप को जो कुछ प्राप्त नहीं करा सकता वह सब कुछ इस कर्म से प्राप्त हो जाता है। अत एव जल का ही प्रणयन प्रथमतया विहित है। **चतुर्थ उपपत्ति** बताते हुए कहते हैं कि-

1. ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम्। ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना।। गीता- 4/24
2. श.प.ब्रा.- 1/1/1/14
3. ऋग्वेद- 10/129/3
4. 'अध्वर्युरध्वरयुरध्वरं युनक्त्यध्वरस्य नेताऽध्वरं कामयत इति वा' - निरुक्त- 1/8
5. श.प.ब्रा.- 1/1/1/15

**यद्वेवापः प्रणयति। देवान् ह वै यज्ञेन यजमानाँस्तानसुररक्षसानि ररक्षुर्न यक्ष्यध्वऽइति तद्यदरक्षरंस्तस्माद्रक्षाथ्ठंसि॥**[1] अर्थात् यह जो जल का प्रणयन करता है उसका अभिप्राय यह है कि जब-जब देवों ने यज्ञ किया तब-तब उन्हें असुरों ने आकर यज्ञ करने से रोका। असुरों ने देवों को यज्ञ करने से रोकने का काम किया, इसलिए उनका नाम राक्षस पड़ा। तब से वे रक्षस अर्थात् रोकू कहे जाने लगे। यद्यपि असुर शब्द का अर्थ शतपथब्राह्मण में प्राण किया गया है- **प्राणो वाऽअसुः (श.प.ब्रा.-6/6/2/6) रा-दाने** धातु से **असून् प्राणान् ददातीत्यसुरः** इस व्युत्पत्ति से प्राण को देनेवाला असुर कहलाता था। बाद में देवताओं के यज्ञ में बाधा उत्पन्न करने के कारण असुर यज्ञविघातक कहलाने लगे।

**ततो देवा एतं वज्रन्ददृशुः। यदपो वज्रो वाऽआपो वज्रो हि वाऽआपस्तस्माद् येनैता यन्ति निम्नङ्कुर्वन्ति यत्रोपतिष्ठन्ते निर्दहन्ति ततऽएतं वज्रमुदयच्छंस्तस्याभयेऽनाष्ट्रे निवाते यज्ञमतन्वत तथो एवैषऽएतं वज्रमुद्यच्छन्ति तस्याभयेऽनाष्ट्रे निवाते यज्ञन्तनुते तस्मादपः प्रणयति॥**[2]

जब-जब असुरों ने देवताओं के यज्ञ में विघ्न उत्पन्न किया तब-तब देवताओं ने इस जलरूप वज्र को खोज निकाला। क्योंकि यह जल ही वज्र है यह **ता एता आपो वज्रीभूत्वा**[3] इस श्रुत्यन्तर वाक्य से भी सिद्ध है। वस्तुतः वज्र अग्निस्वरूप होता है **अग्निर्हि रक्षसामपहन्ता।**[4] अर्थात् अग्नि राक्षसों को भगाने एवं मारने में समर्थ है। इसी हेतु को ध्यान में रखकर श्रुतियों में कहीं अग्नि से जल[5] की उत्पत्ति तो कहीं जल से अग्नि[6] की उत्पत्ति तथा कहीं अग्नि को जल का नाती[7] कहा गया है। तात्पर्य यह है कि शत्रु की सेना के मर्मस्थान का भेदन करने तथा पर्वतादियों को तोड़ने फोड़ने का काम अग्नि ही कर सकता है। इस प्रकार जब जल में अग्नितत्त्व की अधिकता होती है तो वह वज्ररूप हो जाता है। वह वज्ररूप जल जिस मार्ग से जाता है, उस मार्ग को गहरा कर देता है तथा जहाँ रुक जाता है वहाँ के ओषधि वनस्पतियों को जलाकर राख बना देता है, अर्थात् भस्मसात् कर देता है। वस्तुतः जल में ये दोनों धर्म विद्यमान हैं इसलिए जल को वज्र कहा गया है। यहाँ जल सर्वशक्तिसम्पन्नतत्त्व के रूप में प्रतिष्ठापित किया गया है। क्योंकि जल में समस्त देवों

---

1. श.प.ब्रा.- 1/1/1/16
2. श.प.ब्रा.- 1/1/1/17
3. तै.ब्रा.- 1/7/1/6/7
4. श.प.ब्रा.- 1/1/1/9
5. अग्नेरापः तै.उप.- 2/1/2
6. आपो ह यद् बृहतीर्विश्वमायन् गर्भ दधाना जनयन्तीरग्निम् शु.य.सं.- 27/25 तथा त्वामग्ने पुष्करादधि अथर्वा निरमन्थत शु.य.सं.-11/32
7. अपां नपाद् यो वसुभिः सह प्रियः ऋग्वेद-1/143/1

का वास है। अत एव **आपो रेवती:**[1] तथा **आप: सर्वा देवता:**[2] ऐसा भी कहा गया है। इससे यह भी सिद्ध होता है कि जल में समस्त देवताओं की शक्ति व्याप्त है जिस कारण सर्वशक्तिसम्पन्नता का होना भी स्वाभाविक ही है। अत एव देवताओं ने यज्ञविघातक असुरों के विनाशार्थ इसी वज्र को उठाया। देवताओं के द्वारा वज्र उठाते ही असुर वहाँ से भाग खड़े हुए। इस प्रकार वज्र के प्रभाव से निर्भय, निरुपद्रव, शान्त वातावरण में देवताओं ने यज्ञ का वितान (विस्तार) कर लिया। अर्थात् देवताओं ने सबसे पहले अपां प्रणयन करके उसके प्रभाव से यज्ञ को बिना किसी विघ्न-बाधा के पूरा कर लिया। देवताओं के द्वारा इस प्रकार कर्म किये जाने के कारण ही मनुष्यों द्वारा अनुष्ठित यज्ञ में भी यजमान द्वारा अब्रूप वज्र उठाये जाने का विधान प्राप्त है **यद्वै देवा अकुर्वंस्तत् करवाणि** इस मर्यादा की रक्षा के लिए। इन्हीं उपर्युक्त प्रयोजनों के लिए अध्वर्यु **अपां प्रणयन** करता है।

प्रस्तुत व्याख्यान द्वारा अपां प्रणयन क्यों करना चाहिए? किस मन्त्र से करना चाहिए? इत्यादि विषयों की उपपत्ति बतला दी गई। अब किस प्रकार से प्रणयन करना चाहिए? किस स्थान पर प्रणयन करना चाहिए? एवं उस प्रणीतापात्र को किस स्थान पर रखना चाहिए? इत्यादि प्रश्नों के समाधानार्थ **अपां सादन** कर्म का वर्णन करते हैं-

**ता उत्सिच्योत्तरेण गार्हपत्यꣳसादयति योषा वाऽआपो वृषाग्निर्गृहा वै गार्हपत्यस्तद् गृहेष्वेवैतन्मिथुनम्प्रजननं क्रियते वज्रं वाऽएषऽउद्यच्छति योऽप: प्रणयति यो वाऽअप्रतिष्ठितो वज्रमुद्यच्छति नैनꣳशक्नोत्युद्यन्तुꣳसꣳहैनꣳ श्रृणाति।।**[3]

अध्वर्यु वायें हाथ में उदपात्र लेता है, उसमें से जल को दायें हाथ में लिये हुए काष्ठनिर्मित एक चमसाकृति पात्र में डालकर गार्हपत्याग्नि के उत्तरभाग में रख देता है, तदनन्तर **भूतस्त्वा भूत करिष्यामि**[4] यह मन्त्र पढ़ता हुआ उस पात्र का स्पर्श करता है। जल स्त्री है, अग्नि पुरुष है। गार्हपत्य घर है। अत एव आहवनीय के समीप जाने से पहले योषा (स्त्री) रूप जल को गार्हपत्यरूप गृहप्रतिष्ठा में प्रतिष्ठित करता हुआ अध्वर्यु सृष्टि हेतु स्त्री-पुरुष (जोड़ा) को प्रतिष्ठापित करता है। चूँकि स्त्रीपुरुष दोनों के संयोग से ही सृष्टि संभव है। और वह सृष्टिकार्य घर के अन्दर होता है, इसलिए घर में ही प्रतिष्ठित करता है। नीतिविदों ने भी **न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते**[5] कहा है। इस कथन के द्वारा वैदिक मनीषियों ने यह सन्देश दिया है कि कोई भी मनुष्य विवाह करने

1. ऋग्वेद- 10/30/12
2. नारायणोपनिषद्- 29
3. श.प.ब्रा.- 1/1/1/18
4. का.श्रौ.सू.-2/2/1
5. पञ्चतन्त्र- 4/81

